between the first and the इत्। Now taking ह of the 5th aphorism and ल् of the 14th, हल् being obtained as a common name of all consonants, we repeat the rule "हलन्त्यम्" in a different sense, thus—

मित—। स्वं रूपम् इत्यनुवर्त्तते। शिवसूत्रेषु क्रमविन्यस्तानां वर्णानां यस्य कस्यचित् समूहस्य अन्ते यदि इत्संज्ञकः कश्चिद्वर्णः स्यात् तदा तस्य समूहस्य आदिवर्णः तेनैव इता परभूतेन सह उच्चार्य्यमाणः स्वस्य च रूपस्य ग्राहको भवति॥ 'स्वस्य च' इत्युच्यते, कस्य पुनरपरस्य? न हि परभूतस्य इत्संज्ञकस्य वर्णस्य। तस्य तु लोपं वक्ष्यति (६२—१।३।९), लुप्यमानस्य ग्रहणं न सम्भवति। 'आदिः' 'अन्त्यः' इति मध्यापेक्षौ शब्दौ, तत् मध्यपतितस्य वर्णसमूहस्य च प्रत्येकं ग्राहको भवति इत्येवमाशयः। 'मध्यगानां स्वस्य च संज्ञा स्यात्' इति॥ एवं सति योऽयमित्संज्ञको लकारः 'हल्' इति सूत्रे अन्त्यः, तं परतो निधाय आदौ च पञ्चमसूत्रस्थं हकारं यदि 'हल्' इत्युच्चार्य्यते तदा स हल्-शब्दो व्यञ्जनमात्रस्य ग्राहको भवति। इत्थं सिद्धा व्यञ्जनानां हल्संज्ञा। सत्याञ्च संज्ञायां "हलन्त्यम्" (१) इत्यस्य द्वितीया व्याख्या प्रवर्त्तते। तद् यथा—

३। हलन्त्यम्॥ १। ३। ३॥

दी—। उपदेशे अन्त्यं हल् इत् स्यात्। उपदेश आद्योच्चारणम्। ततः 'अण्' 'अच्' इत्यादिसंज्ञासिद्धौ—

In an उपदेश, the final, if a हल्, is इत्। उपदेश is enunciation by the old masters. The names अण्, अच्, etc. being thus established—

मित—। 'आद्यैः' शिवपाणिन्यादिभिः कृतं वर्णानाम् उच्चारणम् उपदेश इत्युच्यते। तत्र वर्णोपदेशे यत् 'अन्त्यं' तच्चेत् 'हल्' स्यात् तस्य इत्-संज्ञा स्यात्॥ शिवसूत्रे चतुर्दश उपदेशाः। सर्वत्र अन्त्यो हल् दृश्यते। तेषामनेन इत्संज्ञा। ण्, क्, ङ्, च्, ट्, ण्, म्, ञ्, ष्, श्, व्, य्, र्, ल्, इतीह इतश्चतुर्दश॥ चकारेण इता सह उच्चार्य्यमाणः अकारः, 'अच्' इति शेषः, स्वराणां संज्ञा। एवम् अणादयोऽपि संज्ञाः सिध्यन्ति॥

३। उपदेशेऽजनुनासिक इत् ॥ १ । ३ । २ ॥

दी—। उपदेशे अनुनासिकः अच् इत्संज्ञः स्यात्। प्रतिज्ञानुनासिक्याः पाणिनीयाः। लण् सूत्रस्थावर्णेन सह उच्चार्य्यमाणो रेफो रलयोः संज्ञा॥ प्रत्याहारेषु इतां न ग्रहणम्, 'अनुनासिकः' इत्यादिनिर्देशात्। न ह्यत्र ककारे परे अच्कार्य्यं दृश्यते॥ 'आदिरन्त्येन—" (२—१।१।७१) इत्येतत् सूत्रेण कृताः संज्ञाः प्रत्याहारशब्देन व्यवह्रियन्ते॥

In an उपदेश a nasal अच् is इत्। The nasality of Panini's letters has expressly to be declared. The अ in the aphorism लण् is nasal. र read with this is a common name for both र and ल। These common names (प्रत्याहार) do not include the इत् letters, because then अच् would include क्; and in the word अनुनासिक as pronounced by पाणिनि here, since इ is followed by क् which is an अच्, the इ should become य। The absence of this transformation when क follows proves that अच् etc. do not include ण्, क् etc. Common names obtained by the application of the rule "आदिरन्त्येन—" (2—1. 1. 71) are referred to by the word प्रत्याहार।

मित—। अनुगतो नासिकाम् अनुनासिकः। तस्य भाव आनुनासिक्यम् अनुनासिकता। पाणिनिना प्रोक्ता वर्णाः पाणिनीयाः॥ प्रतिज्ञायते इति प्रतिज्ञा प्रतिज्ञातं वस्तु। कर्मण्यङ्। प्रतिज्ञा आनुनासिक्यं येषां ते प्रतिज्ञानुनासिक्याः, येषामनुनासिकता उच्चारणान्न ज्ञायते किन्तु इमे अनुनासिका इमे न इति स्फुटोक्त्या लभ्यते तादृशाः॥ लण्सूत्रे यः अकारः स गुरुपरम्परया अनुनासिक इति कथ्यते। ततस्तस्य इत्संज्ञा। तेन इता सह पञ्चमसूत्रस्थो रेफो उच्चार्य्यमाणो रलयोर्ग्राहको भवति तदाह 'रलयोः संज्ञा' इति॥ इतामग्रहणं प्राग्व्याख्यातम्। तत्र पक्षे युक्त्यन्तरं सूत्रकारस्य व्यवहारः। स हि 'अनुनासिक' इति पठति। यदि 'अच्' इत्युक्ते द्वितीयसूत्रस्थस्य इत्संज्ञकस्य, ककारस्यापि ग्रहणं स्यात् तदा "इको यण्—" (४७—६।१।७७) इति इकारस्य यणादेशे अनुनास्यक् इति स्यात्।

ततश्च "लोपोव्योः—" ( ८७३—६ । १ । ६६ ) इति यलोपं कृत्वा 'अनुनासिक' इति पठेत् । अण्, अक् इत्यादयः संज्ञाः प्रत्याहाराः ।

४ । ऊकालोऽज्झ्रस्वदीर्घप्लुतः ॥ १ । २ । २७ ॥

दी—। उश्च ऊश्च उ३श्च वः। वां काल इव कालो यस्य सः अच् क्रमात् ह्रस्वदीर्घप्लुतसंज्ञः स्यात् । स च प्रत्येकमुदात्तादिभेदेन त्रिधा ।

Vowels having their time of pronunciation similar to that उ, ऊ and उ३ are respectively called ह्रस्व, दीर्घ and प्लुत। Each of these again falls into three classes according as it is उदात्त, अनुदात्त or स्वरित।

मित—। 'उ ऊ उ३' इति त्रयाणां द्वन्द्वे संहितायाम् दीर्घादेशे 'ऊ' इति प्रातिपदिकम् । प्रथमाया बहुवचने 'वः' इति ॥ कालः उच्चारणकालः मात्रा इत्यर्थः । उ इत्येकमात्रः, ऊ इति द्विमात्रः, उ३ इति त्रिमात्रः । 'वां काल इव' इत्यादिना एकमात्रस्य द्विमात्रस्य त्रिमात्रस्य च अचो ग्रहणम् ॥ ह्रस्वश्च दीर्घश्च प्लुतश्च ह्रस्वदीर्घप्लुताः । ताः संज्ञा यस्य स ह्रस्वदीर्घप्लुतसंज्ञः । क्रमेण ग्रहणात् एकमात्रस्य अचो ह्रस्वः, द्विमात्रस्य दीर्घः, त्रिमात्रस्य प्लुतः इति संज्ञा ॥ 'स च' ह्रस्वः दीर्घः प्लुतः इति त्रिधा विभक्तः अच् 'प्रत्येकं' पुनः उदात्तो ह्रस्वः अनुदात्तो ह्रस्वः स्वरितो ह्रस्वः इत्यादि क्रमेण त्रिधा विभज्यते । तदेवमचां प्रत्येकं नव भेदाः सम्भवन्ति ॥ उदात्तादीन् विवृणोति—

५ । उच्चैरुदात्तः ॥ १ । २ । २९ ॥

दी—। ताल्वादिषु सभागेषु स्थानेषु ऊर्द्ध्वभागे निष्पन्नः अच् उदात्तसंज्ञः स्यात् । आ । ये ।

Palate etc. are the regions from which letters are pronounced. These regions are not geometrical points, but are of definite extent. Vowels proceeding from their higher parts are called उदात्त। Thus आ is उदात्त ; so is the ए in ये।

मित—। उच्चैरितीह सप्तम्यर्थप्रधानम् । उच्चैः ऊर्द्ध्वे उदात्तः इत्यन्वयः ॥ 'अच्' इत्यनुवर्त्तते । भागवन्ति किल ताल्वादीनि वर्णानामुच्चारणस्थानानि । प्रभृत

प्रतितो वायुर्यदा तेषामूर्द्धभागे प्रतिहतः सन्नचं जनयति तदा स अच् उदात्त इत्युच्यते ॥ उदाहरणञ्च 'आ' इति निपातः । 'ये' इत्यत्र एकारश्च ॥

## ६ । नीचैरनुदात्तः ॥ १ । २ । ३० ॥

दी—। स्पष्टम् । अर्वाङ् ।

Vowels proceeding from the lower parts are called अनुदात्त। Thus the अ is अनुदात्त in अर्वाङ्।

मित—। नीचैरित्यव्ययमिह सप्तम्यर्थप्रधानम् । नीचैरधः उत्पन्नः अच् अनुदात्तः इत्यन्वयः ॥ अर्वाङ् इत्यवुग्रत्पन्नमभिमुखवाचि । अस्य अकारः अनुदात्तः ॥

## ७ । समाहारः स्वरितः । १ । २ । ३१ ॥

दी—। उदात्तत्वानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन् सः अच् स्वरितसंज्ञः स्यात् ।

A vowel in which the characteristics of being उदात्त and of being अनुदात्त as well, are found is called स्वरित। See Examples under next.

मित—। समाह्रियेते अस्मिन् समाहारः । अधिकरणे घञ् । यद्वा—समाहरणं समाहारः । भावे घञ् । सः अस्त्यस्मिन् समाहारः । अर्श आद्यच् ॥ 'अच्' इत्यनुवर्त्तते । 'समाहारः' इति तस्य विशेषणम् । समाहारो यः अच् स स्वरितसंज्ञो भवति इत्यर्थः ॥ कस्येदं समाहरणम् ? प्रसङ्गात् उदात्ततायाः । अनुदात्ततायाश्च । तदाह 'उदात्तत्वानुदात्तत्वे वर्णधर्मौ' इत्यादि । वर्णधर्मौ इत्युच्यते न 'वर्णौ' इति । वर्णयोर्वर्णे समाहारः असम्भवः । धर्मयोरेकस्मिन्नचि समाहारः ॥ एतेन यो हि अच् उच्चारणकाले अंशत उदात्तः श्रूयते अंशे च अनुदात्तः स स्वरित इति फलितम् । कस्मिन्नंशे उदात्त कस्मिंश्च अनुदात्तत्वं परसूत्रे वक्ष्यते ॥

## ८ । तस्यादित उदात्तमर्द्धह्रस्वम् ॥ १ । २ । ३२ ॥

दी—। ह्रस्वग्रहणमतन्त्रम् । स्वरितस्य आदितोऽर्धम् उदात्तं बोध्यम् । उत्तरार्द्धं तु परिशेषादनुदात्तम् । तस्य च उदात्तस्वरितपरत्वे

श्रवणं स्पष्टम्। अन्यत्र तु उदात्तश्रुतिः प्रातिशाख्ये प्रसिद्धा। क वोऽश्वाः, रथानां न येऽराः, शतचक्रं योऽह्यः, इत्यादिषु अनुदात्तश्रुतिः। अग्निमीले इत्यादौ उदात्तश्रुतिः। स नवविधोऽपि प्रत्येकमनुनासिकत्वाननुनासिकत्वाभ्यां द्विधा।

The last half of a light स्वरित vowel is उदात्त। There is no emphasis on the word ह्रस्व in the rule; the rule holds also in the case of दीर्घ and प्लुत vowels that are स्वरित। Hence, generally the first half of a स्वरित vowel is उदात्त; and it follows necessarily that the second half is अनुदात्त। The अनुदात्त half is manifest to the ear only when an उदात्त or a स्वरित vowel follows. Otherwise it is well-known that the प्रातिशाख्य pronounces it as an उदात्त vowel. Thus the अनुदात्त half of a ह्रस्वस्वरित is heard in क वोऽश्वाः in which क has a ह्रस्वस्वरित followed by the उदात्त vowel in वो; that of a दीर्घस्वरित is heard in रथानां न येऽराः where ये has a दीर्घस्वरित followed by the उदात्त vowel in रा; that of a प्लुतस्वरित is heard in शतचक्रं योऽह्यः the प्लुत स्वरित in यो being followed by the स्वरित vowel in ह्य। In other cases even the अनुदात्त is pronounced as उदात्त as in अग्निमीले where of the स्वरित vowel in मी the अनुदात्त half too is pronounced as उदात्त because the vowel in ले is neither उदात्त nor स्वरित। Through ह्रस्वत्व etc. and through उदात्तत्व etc. each vowel is of 9 varieties. Each again falls under two heads according as it is nasal or non-nasal.

मित—। ह्रस्वस्य 'तस्य' स्वरितस्य 'आदितः' आदौ यत् 'अर्द्धह्रस्वं' तत् 'उदात्तं' भवति॥ इह 'अर्द्धह्रस्वम्' इति यदुच्यते तत्र ह्रस्वत्वे नाग्रहः। अर्द्धदीर्घमपि उदात्तम् तथा अर्द्धप्लुतञ्च। तदाह 'ह्रस्वग्रहणमतन्त्रम्' इति। तन्त्रं शास्त्रम् विधिः। ह्रस्वस्यैव स्वरितस्य एष विधिरिति न, दीर्घस्यापि प्लुतस्यापि च इत्यर्थः॥ उदात्तानु-

दात्तयोरिह समाहारः। तत् प्रथमार्द्धं चेदुदात्तं द्वितीयार्द्धमनुदात्तमिति शिष्यते। तदाह 'परश्शेषादनुदात्तम्' इति॥ एवं स्वरितानामेकमात्रस्य ह्रस्वस्य आदौ अर्द्धमात्रा उदात्ता अन्ते अर्द्धमात्रा अनुदात्ता, द्विमात्रस्य दीर्घस्य आदौ एकमात्रा उदात्ता अन्ते एकमात्रा अनुदात्ता, त्रिमात्रस्य प्लुतस्य आदौ सार्द्धमात्रा उदात्ता अन्ते सार्द्धमात्रा अनुदात्ता॥ यदा द्वावचौ सन्निहितौ भवतः, पूर्वश्च तयोः स्वरितः, तदा परश्चेदुदात्तः द्वयोरुदात्तयोर्मध्ये पतितः स्वरितस्य अनुदात्तो भागः स्पष्टमुपलभ्यते। परस्य स्वरितत्वेऽपि स्वरितयोरुदात्तपूर्वभागयोर्मध्ये प्रथमस्य स्वरितस्य अनुदात्तो भागः पतति श्रवणञ्च प्राग्वत् स्पष्टमेव। तदाह 'उदात्तस्वरितपरत्वे' इत्यादि। उदात्तो वा स्वरितो वा उदात्तस्वरितौ, चार्थाभावात् बहुव्रीहिरयम्। उदात्तस्वरितौ परौ यस्मात् स उदात्तस्वरितपरः। तस्य भावः। 'तस्य च' अनुदात्तार्द्धस्य 'उदात्तस्वरितपरत्वे' सति 'श्रवणं स्पष्टम्' इत्यर्थः। 'अन्यत्र' उदात्तस्वरितपरत्वाभावे मध्यपतितः अनुदात्तार्द्धः अनुदात्तत्वेन उच्चारितः अनुपलब्ध इति उदात्त एव उच्चार्य्यते। एष च व्यवहारः प्रातिशाख्ये दृश्यते॥ ह्रस्वंस्वरितमुदाहरति—क्व इत्यकारः स्वरितः। भो इत्योकार उदात्तः। मध्ये पतितं स्वरितस्य अनुदात्तार्द्धं श्रूयते एव॥ दीर्घं उदाक्रियते—ये इत्येकारः स्वरितः। रा इत्याकार उदात्तः। अन्तरा स्वरितस्य अनुदात्तार्द्धं श्रूयते॥ प्लुतपक्षे—यो इत्योकारः स्वरितः प्लुतश्च। ह्यः इत्यकारोऽपि स्वरितः। मध्यस्थं स्वरितस्य अनुदात्तार्द्धं श्रूयते॥ उदात्तंश्रवणम् दर्शयति—भौ इतीकारः स्वरितः। ले इत्येकारस्तु न उदात्तः न वा स्वरितः। तत् ईकारस्य अनुदात्तमपि परार्द्धमुदात्तमुच्चार्य्यते तथैव च श्रवणं भवति॥ ह्रस्वत्वादिभिः उदात्तत्वादिभिश्च प्रत्येकं नवविधा अचः इति प्रागुक्तम्। ते पुनः प्रत्येकमनुनासिका वा अननुनासिका वा भवति॥ किमिदमनुनासिक इति तदाह—

## ९ मुखनासिकावचनोऽनुनासिकः॥ १। १। ८॥

**दी—। मुखसहितया नासिकया उच्चार्य्यमाणो वर्णः अनुनासिकसंज्ञः स्यात्। तदित्थम्—अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः। लृ वर्णस्य द्वादश, तस्य दीर्घाभावात्। एचामपि द्वादश तेषां ह्रस्वाभावात्।**

अनुनासिक is a letter pronounced through mouth and nose in conjunction. Thus there are eighteen varieties of each of

अ, इ, उ, ऋ ; of ऌ there are 12 only because ऌ has no दीर्घ form ; and of ए, ओ, ऐ, औ also there are only 12 because these have no ह्रस्व form.

मित—। अनुगतो नासिकाम् अनुनासिकः, नासिकाद्वारेण उच्चारितो वर्णः। किमसौ केवलया एव नासिकया उच्चार्य्यते ? न इत्याह 'मुखनासिकावचनः' स इति॥ उच्यते अनेन इति वचनम्। करणे ल्युट्। सामान्ये नपुंसकम्। मुखसहिता नासिका मुखनासिका, शाकपार्थिवादिकर्मधारयः। मुखनासिका वचनमस्य 'मुखनासिकावचनः'। एतदेव भाष्यसम्मतं व्याख्यानम्। तत्र पुनः मुखञ्च नासिका च मुखनासिकम्। प्राण्यङ्गत्वात् समाहार एव। तत् वचनमस्य इतिः मुखनासिकवचनः इति प्राप्ते इहैव निपातनात् दीर्घे मुखनासिका-वचन इति व्याख्यानान्तरमपि दृश्यते॥ एवमचः प्रत्येकम् अनुनासिका नव अननुनासिका नव इत्यष्टादश॥ ऌकारस्य दीर्घाभावात् ह्रस्वाः षट्, प्लुताः षट् इति द्वादश॥ एचां ह्रस्वाभावात् प्रत्येकं दीर्घाः षट् प्लुताः षट् इति द्वादश॥

## १०। तुल्यास्यप्रयत्नं सवर्णम्॥ १।१।९॥

**दी—। ताल्वादि स्थानम् आभ्यन्तरप्रयत्नश्च इत्येतत् द्वयं यस्य येन तुल्यं तत् मिथः सवर्णसंज्ञं स्यात्।**

Letters originating from the same spot in the mouth and from a similar effort are called सवर्ण of one another.

मित—। आस्यं मुखं मुखविवरमिति यावत्। आस्ये भवम् आस्यं ताल्वादिस्थानम्। "शरीरावयवाच्च" (१४३०) इति यत्। प्रकृष्टो यत्नः प्रयत्नः। कः सः ? आभ्यन्तरः। वर्णोत्पत्तेः प्राग्भवत्वात् तस्यैव बाह्यप्रयत्नात् प्रकर्षः। तदाह 'आभ्यन्तरप्रयत्नः' इति। आस्यञ्च प्रयत्नश्च आस्यप्रयत्नौ। तुल्यौ आस्य-प्रयत्नौ यस्य तत् तुल्यास्यप्रयत्नम्॥ किं सवर्णम् ? यस्य तुल्यौ तत् सवर्णम्। कस्य सवर्णम् ? येन तुल्यौ तस्य। प्रत्येकमितरस्य सवर्णमिति फलितम्। तदाह 'मिथः सवर्णसंज्ञम्' इति आस्यसमता प्रयत्नसमता च परस्परं सवर्णत्वे हेतुः इत्यर्थः॥

**दी—। अकुहविसर्जनीयानां कण्ठः। इचुयशानां तालु। ऋटुरषाणां मूर्द्धा। लतुलसानां दन्ताः। उपूपध्मानीयानाम् ओष्ठौ। ञमङणनानां**

नासिका च। एदैतोः कण्ठतालु। ओदौतोः कण्ठोष्ठम्। वकारस्य दन्तोष्ठम्। जिह्वामूलीयस्य जिह्वामूलम्। नासिका अनुस्वारस्य। इति स्थानानि।

The spots of origin are—(a) *Throat* of अ, कवर्ग, ह, विसर्ग ; (*b*) *Palate* of इ, चवर्ग, य, श ; (c) *Cerebrum* of ऋ, टवर्ग, र, ष ; (d) *Teeth* of ऌ, तवर्ग ; ल, स ; (e) *Lips* of उ, पवर्ग, उपध्मानीय ; (f) *Nose* also of ञ, म, ङ, ण, न ; (g) *Throat and Palate* of ए, ऐ; (h) *Throat and Lips* of ओ and औ ; (i) *Teeth and Lips* of व ; (j) *Root of the Tongue* of जिह्वामूलीय ; (k) Nose of अनुस्वार।

मित—। कु इति कवर्गः। विसर्जनीय इति विसर्गः। अश्च कुश्च हश्च विसर्जनीयश्च इति द्वन्द्वः। कण्ठः इत्यतः परं 'स्थानम्' इति योज्यम्। एषामुच्चारणस्थानं कण्ठः इत्यर्थः। एवमुत्तरत्रापि॥ चु इति चवर्गः। प्राग्वत् द्वन्द्वः॥ टु इति टवर्गः। प्राग्वत् द्वन्द्वः॥ तु इति तवर्गः। ततो द्वन्द्वः॥ पु इति पवर्गः। उश्च पश्च उपौ। तौ ध्मायेते आभ्याम् उपध्मानौ ओष्ठौ। तत्र भव उपध्मानीयः ओष्ठजातो वर्णः। स च विसर्गस्य आदेशभेदः। ततो द्वन्द्वः॥ ञकारादयो वर्गपञ्चमाः। एषां यथाक्रमं प्रागुक्तानि ताल्वादीनि स्थानानि परं 'नासिका च'। ताल्वादिसमेता नासिका एषामुच्चारणस्थानमित्यर्थः॥ एत् ऐत् ओत् औत् इति तकार उच्चारणसौकर्य्यार्थः। तथा शिक्षायाम् "ए ऐ तु कण्ठतालव्यौ" इति "ओ औ कण्ठोष्ठजौ स्मृतौ" इति च विनैव तकारं पठ्यते॥ कण्ठतालु कण्ठोष्ठम् दन्तोष्ठम इति समाहारे द्वन्द्वाः॥ जिह्वामूले भव जिह्वामूलीयः। अयमपि विसर्गस्य आदेशान्तरम्॥ अनु पश्चात् अचः परमित्यर्थः स्वर्य्यते ध्वन्यते इति अनुस्वारः। कर्मणि घञ्॥

दी—। प्रयत्नो द्विधा आभ्यन्तरो बाह्यश्च। आद्यश्चतुर्धा—स्पृष्टेषत्स्पृष्टविवृतसंवृतभेदात्। तत्र स्पृष्टं प्रयतनं स्पर्शानाम्, ईषत्स्पृष्टमन्तःस्थानाम्, विवृतमूष्मणां स्वराणाञ्च। ह्रस्वस्य अवर्णस्य प्रयोगे संवृतं प्रक्रियादशायां तु विवृतमेव। एतच्च सूत्रकारेण ज्ञापितम्। तथा हि—

Effort is two-fold—Internal (*anterior* to the generation of the letter) and External (*posterior* to the utterance). The first (Internal effort) again is of four kinds—Firmly touched ;

Lightly touched, Open, Contracted. Of these *Firmly touched effort* belongs to the वर्गीय letters which are hence called स्पर्शवर्ण। *Lightly touched* is of the अन्तःस्था letters. *Open effort* goes with the ऊष्मन् (aspirate) and the vowels. *Contracted effort* pertains to the short अवर्ण as used in language; but when this अ is being subjected to the operation of a rule the effort is विवृत as of the other vowels. This is indicated by the Sutrakara Panini himself, thus—

*N.B.*—The 'touch' spoken of here is of the *tongue* with the corresponding part of the mouth. The touch may be firm or light. Or there may be no touch at all the tongue merely approaching the part ( संवृत ) or standing wide apart from it ( विवृत )।

मित—। प्रयत्न इह यत्नपर्य्यायो लौकिकः शब्दः, सौत्रात् प्रयत्नशब्दात् भिन्न एव। द्विधा इत्यत्र भिद्यते इति योजनीयम्। एवं 'चतुर्धा' इत्यत्रापि॥ 'आभ्यन्तरः' वर्णोत्पत्तेः प्राग्भवः। 'बाह्यः' ततः परम्॥ स्पृष्टं स्पर्शः, जिह्वया उच्चारणस्थानस्य इति शेषः। भावे क्तः। तदस्ति अस्मिन् इति स्पृष्टः। अर्श आद्यच्। विवृतं विवारः गलविवरस्य सम्प्रसारणम्। संवृतं संवारः गलविवरस्य सङ्कोचः। उभयत्र नपुंसके भावे क्तः। ततः अर्श आद्यच्। यद्वा स्पृष्टादीनि कर्मणि क्तान्तानि स्थानस्य विशेषणानि उपचारात् प्रयत्नस्य विशेषणानि, इह वर्णोत्पत्तये स्थानं प्रति चलिता जिह्वा यदि किञ्चित् प्रसृत्य दूरत एव तिष्ठति स्थानात् तदा विवृतः प्रयत्नः, सन्निधौ अवस्थाने संवृतः, समीपतरवर्त्तिन्यां तस्याम् ईषत्स्पृष्टे स्थाने ईषत्स्पृष्टः प्रयत्नः, सम्यक् स्पृष्टे स्पृष्ट इति विवेकः॥ 'तत्र' चतुर्षु एतेषु प्रयत्नभेदेषु इत्यर्थः। प्रयतनं प्रयत्नः। 'स्पर्शानाम्' ककारादारभ्य मकारपर्य्यन्तं वर्गीयाणाम्। 'अन्तःस्थानाम्' यरलवानाम्। 'अन्तःस्था' इत्याकारान्तः स्त्रियां वर्त्तमानः शब्दः। तथा च शिक्षा—"हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम्" इति। 'ऊष्मणाम्' शषसहानाम्। भाष्ये तु एषामीषद्विवृतः प्रयत्न उक्तः। तथा हि—"विवृतमूष्मणाम्। ईषदित्येवानुवर्त्तते। स्वराणाञ्च विवृतम्। ईषदिति निवृत्तम्" इति॥ 'प्रयोगे' लोके वेदे च। यत्र यत्र ह्रस्वः अकारः श्रूयते इति भावः। यदि सर्वत्र संवृतश्रुतिः कथम् "अ इ

उ ण्" इति शास्त्रादौ विवृत उपदिश्यते अकारः ? उत्तरमाह—'प्रक्रियादशायाम्' इत्यादिभिः। 'प्रक्रिया' सूत्रोक्तप्रक्रिया। 'प्रक्रियादशायाम्' कृत्स्नस्य व्याकरणशास्त्रस्य प्रवृत्तिकाले। तदा यथा विवृतौ गृह्येत तदर्थं विवृतोपदेशः इत्याशयः। ननु शास्त्र-प्रवृत्तौ य्ः विवृतं विवृतमेव तत्स्यात् कथं पुनर्लौकिकवैदिकव्यवहारे तस्य संवृतता जायेत ? अत्राह 'एतच्च' इत्यादिभिः। एतदर्थं सूत्रकार एव प्रमाणम्। स हि ईदृशं शास्ति तमेवानुसरामो वयमित्यर्थः। 'तथा हि' इति ताद्दशं सूत्रकारस्य विधायकं सूत्रमवतारयति।

११। अ अ ॥ ८। ४। ६८॥

दी—। इति विवृतमनूद्य संवृतोऽनेन विधीयते। अस्य च अष्टा-ध्यायीं सम्पूर्णां प्रति असिद्धत्वात् शास्त्रदृष्ट्या विवृतत्वमस्त्येव। तथा च सूत्रम्—

He quotes the विवृत form of अ and enjoins of it the संवृत form as a substitute in both Veda or Bhasha. But the result of this injunction is invalid with respect to the whole of the eight chapters of Panini ; hence for the application of the rules the अ is still to be considered as विवृत। To this effect is the rule—

*N.B.*—Panini's system consists of eight chapters only, each with four sections.

मित—। 'इति' अनेन प्रकारेण, "अ अ" इति सूत्रयित्वा इत्यर्थः 'अनेन' सूत्रकारेण पाणिनिना 'विवृतम्' अकारं शास्त्रादौ उपदिष्टम् 'अनूद्य' अनुकथयित्वा, विवृतस्य अनुवादं कृत्वा इत्यर्थः यथोपदिष्टं विवृतमकारमुच्चार्य इति यावत् तस्यैव अकारस्य अपरः 'संवृतः' अकारः 'विधीयते'। एतेन सूत्रस्य आद्यः अकारः विवृतः द्वितीयः संवृतः—आद्यः अनुवादः द्वितीयो विधिः—इति फलितम्। सूत्रञ्च तत्त्वतः "अस्य अः" इत्येव। विभक्तिलोपस्तु आर्षः। प्रयत्नभेदादनयोरकारयोः सावर्ण्यं नास्ति, तेन न सन्धिः॥ अथ किमायातमेतेन "अ अ" इति सूत्रेण ? शास्त्रेऽस्मिन् विवृतोऽयमकारः पठितः। लोके वेदे च पुनः सर्वत्र संवृत एव दृश्यते विवृतः क्वापि

नास्ति। तदस्यत्र व्यवहारेण विरोधो व्याकरणस्य। सूत्रेणानेन तु स विरोधः समीकृतः। एवं "मम अङ्गम्", "मम आसनम्" इत्यादिषु लौकिकव्यवहारेषु योऽयमकारः संवृतो दृश्यते सूत्रानुमत एव स इत्यस्ति सार्थकता सूत्रस्य। अधिकमुत्तरत्र द्रष्टव्यम्॥ इह "तथा हि अ अ इति विवृतमनूद्य" इत्यादि दीक्षितस्य ग्रन्थः। तत्र 'इति' शब्दः केषाञ्चित् सूत्राङ्गम् अपरेषां पुनर्मास्त्येव। उभयमप्यसत्। "अ अ" इत्येव सूत्रं नाधिकम्। 'इति' शब्दो वृत्तौ पाठ्यः। पूर्वसूत्रवृत्तिस्थेन 'तथा हि' इत्यनेन सह समुदायस्य मिलितोऽन्वयश्च॥ 'अस्य च' एतस्य पुनः संवृतविधेः 'अष्टाध्यायीं सम्पूर्णां प्रति असिद्धत्वात्' अकृतवत्त्वात् 'शास्त्रस्य' समग्रस्य व्याकरणशास्त्रस्य 'दृष्ट्या' दर्शनेन विवृतत्वमस्त्येव' व्याकरणशास्त्रविधिमतमकृतमेव मन्यते, स्वकार्यकाले अकारं विवृतमेव पश्यति इति भावः॥ 'तथा च तत्पक्षे च, असिद्धतां प्रति पुनः, 'सूत्रम्' अवतारयति।

## १२। पूर्वत्रासिद्धम्॥ ८।२।१॥

दी—। अधिकारोऽयम्। तेन सपादसप्ताध्यायीं प्रति त्रिपादी असिद्धा। त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धं स्यात्।

Invalid with respect to what precedes. This is dominative ( अधिकार ) and affects all that follows Hence, with respect to the preceding seven chapters and a quarter, the three quarters that follow are invalid; in these three quarters again, a posterior injunction is invalid with respect to all anterior injunctions

मित—। 'पूर्वत्र' पूर्वोक्तेषु शास्त्रेषु विषये 'असिद्धम्' अकृतम्, कृतमपि कार्यम् अकृतं मन्तव्यमित्यर्थः। किमसिद्धमित्यपेक्षायामाह 'अधिकारोऽयम्'। अधिक्रियते इत्यधिकारः। कर्मणि घञ्। 'पूर्वत्रासिद्धम्' इत्येष निर्देशः उत्तरत्र सर्वत्र अधिक्रियते। अतः परम् आ अध्यायसमाप्तेः यत् यत् कार्यं अनुशिष्टं तत्तत् कृतमपि परत्र एव सिद्धं पूर्वत्र तु असिद्धमित्यर्थः॥ एवं सति "मम अङ्गम्" "मम आसनम्" इत्यादिषु यदि संहितया "ममाङ्गम्" "ममासनम्" इत्यादिकमिष्यते तर्हि "मम अङ्गम्" इत्यत्र न हि संवृतयोरकारयोर्दीर्घ एकादेशः। "अकः" सवर्णे

ग्रन्थान्ते कृता संवृतता "अकः सवर्णे दीर्घः" (८५—६।१।१०१) इत्येतत् प्रति-प्रसिद्धा। अतो दीर्घविधौ द्वावप्येतौ विवृतावेव गृह्येते, विवृतयोरेव च दीर्घ एकादेशः क्रियते। एवं "मम आसनम्" इत्यत्रापि॥

दी—। बाह्यप्रयत्नस्त्वेकादशधा—विवारः संवारः श्वासः नादः घोषोऽघोषः अल्पप्राणो महाप्राण उदात्तः अनुदात्तः स्वरितश्च इति।

External effort falls under eleven heads—(1) विवार expansion (2) संवार contraction ; (3) श्वास aspiration, (4) नाद sound ; (5) घोष resonance, (6) अघोष non-resonance ; (7) अल्पप्राण light breath, (8) महाप्राण deep breath ; (9) उदात्त high, (10) अनुदात्त not high, (11) स्वरित intermediate.

मित—। 'प्रयत्नः' इह सूत्रस्थप्रयत्नशब्दात् भिन्न एव शब्दः चेष्टामात्रपरः न केवलम् आभ्यन्तरचेष्टावचनः। अतएवास्य 'बाह्यः' इति विशेषणं सङ्गच्छते॥ वर्णोत्पत्तेः परमेकादशविधाश्चेष्टाः सम्भाव्यन्ते। ताश्च विवारसंवारौ गलविवरस्य विकाशसङ्कोचौ, श्वासनादौ वायुप्रेरणमात्रं सशब्दं वा तत्, घोषाघोषौ अनुरणननिरनुरणने, अल्पप्राणमहाप्राणौ स्वल्पं वा बहु वा वातप्रेरणम्, उदात्तः, अनुदात्तः, स्वरितश्च॥ उदात्तादीनां त्रयाणां ग्रहणं जयादित्यानुरोधात्। भाष्ये तु अष्टावेव, इतरे प्रोक्ता न एकादश॥

दी—। खरां यमाः खयः ⌒क ⌒पौ विसर्गः शर एव च।
एते श्वासानुप्रदाना अघोषाश्च विवृण्वते।
कण्ठमन्ये तु घोषाः स्युः संवृता नादभागिनः।
अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः॥ १—२॥

वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे मध्ये 'यमो' नाम पूर्वसदृशो वर्णः प्रातिशाख्ये प्रसिद्धः। पलिक्क्नीः, चख्ख्नतुः, अग्ग्निः, घ्घ्नन्ति इत्यत्र क्रमेण कखगघेभ्यः परे तत्सदृशा एव यमाः। तत्र (? अत्र) वर्गाणां प्रथम द्वितीयाः खयः, तथा तेषामेव यमाः जिह्वामूलीयोपध्मानीयौ, विसर्गः, शषसाश्च, इत्येतेषां विवारः श्वासः अघोषश्च। अन्येषां तु संवारो नादो घोषश्च। वर्गाणां प्रथमतृतीयपञ्चमाः प्रथमतृतीययमौ यरलवाश्च अल्पप्राणाः। अन्ये महाप्राणा इत्यर्थः।

The खय् letters, the यम letters resulting from खय्, the ⌣ क and ⌣ प letters, the विसर्ग and शर् letters—these give out श्वास, are अघोष and expand the throat after they are generated. The other letters are घोष, संवृत and have नाद। The odd letters in each वर्ग and the यम letters got out of them as well as the यण् letters are known as अल्पप्राण (1—2). The sense is this—In the प्रातिशाख्य when any of the first four letters of a वर्ग is followed by the fifth of any वर्ग, then between them comes in a letter exactly like the preceding and is called a यम। Thus in पलिक्क्नीः, चख्ख्नतुः, अग्ग्निः, घ्घ्नन्ति we have in order after क, ख, ग, घ, a यम letter like the preceding. Of these (? Here) the खय् letters which are first and second of each वर्ग, the यम of these as well, the जिह्वामूलीय, the उपध्मानीय, the विसर्ग, and श, ष, स, have, विवार, श्वास and अघोष। Of others again the प्रयत्न is संवार, नाद, घोष। The first, third and fifth letters of each वर्ग, the यम letters of the first and third, य, र, ल, व are अल्पप्राण। The rest are महाप्राण।

मित—। श्लोकयोर्मिलितोऽन्वयः। 'एते' इति खयादयः। श्वासः अनुप्रदानं येषां ते श्वासानुप्रदानाः। एते कण्ठं विवृण्वते इत्यन्वयः। एतेषां विवाराख्यो बाह्य-प्रयत्न इत्यर्थः॥ अन्ये तु घोषाः संवृता नादभागिनः स्युः इत्यन्वयः॥ वर्गेषु यमेषु वर्गे-यमौ। तद्गताः। कर्त्तरि ड-प्रत्ययः। वर्गगता यमगताश्च ये अयुग्मा वर्णा इत्याशयः। अल्पासवः अल्पप्राणाः॥ १—२॥ श्लोकद्वयं व्याख्यायते तत्रेति। 'वर्गेषु' इत्यस्य कण्ठेन स्थितशब्देन अन्वयः। 'वर्गेषु' स्थितानाम् 'आद्यानाम्' इत्यादि। अधिकरणे सप्तमी॥ 'चतुर्णाम्' इति 'पूर्वसदृशः इत्यनेन सम्बन्धः। निर्द्धारणे षष्ठी॥ पञ्चमे इति भावे सप्तमी॥ पूर्व, पर मध्य इत्यापेक्षिकाः शब्दाः॥ तदयमर्थो लभ्यते—'वर्गेषु' पञ्चसु स्थितानाम् 'आद्यानां चतुर्णां' यः कश्चिदेकः यस्य कस्यचिद्वर्गस्य, 'पञ्चमे' वर्णे 'परे' सति 'पूर्वो' भवति 'तत्सदृशः, तेन पूर्वेण समानाकारः तयोरेव पूर्वा-परयोः 'मध्ये' वर्ण एको जायते इति 'प्रातिशाख्ये प्रसिद्धः' स च 'यमो नाम' वर्णः॥ पलिक्क्नीः इत्यत्र ककारनकारयोर्मध्ये ककारसदृशस्तुरीयो वर्णो यमः। एवमुत्तर-त्रापि॥ 'तत्र' इत्यपपाठ इवाभाति। 'अत्र' इति स्यात्। 'अत्र' अस्मिन् श्लोकद्वये

प्रवर्त्तिना 'इत्यर्थः' इत्यनेन सम्बन्धः वर्गीयाणां तृतीयचतुर्थपञ्चमानां, तथा तृतीय-चतुर्थयमानां, तथा अनुस्वारस्य, तथा च स्वराणाम् ॥ 'अल्पप्राणाः' इत्यत्र स्वरा अपि संख्येयाः एतत्तु 'यरलवाश्च इत्यत्र चकारबलेन इति नागेशः ॥ तद्यमाः, शषसहाः, अनुस्वारविसर्गौ च। इह 'अन्ये' इत्यतः परं 'द्वितीयचतुर्थौ शलश्च' इति क्वचित् पठ्यते। परमनुस्वारविसर्गयोरग्रहणादपपाठ एव सः ॥

दी—। बाह्यप्रयत्नाश्च यद्यपि सवर्णसंज्ञायामनुपयुक्ताः तथापि आन्तर-तम्यपरीक्षायामुपयोक्ष्यन्ते इति बोध्यम्।

Although external efforts have no place in the definition of a सवर्ण, still it has to be noted that they will be of utility in the test for the most similar substitutes of letters.

मित—अनुपयुक्ताः उपयोगरहिताः। "तुल्यास्य—"इत्यत्र प्रशब्दस्य प्रकर्षार्थ-त्वात् आभ्यन्तरो यत्न एव लक्ष्यते इत्युक्तं प्राक्। तस्यैव सवर्णसंज्ञायामुपयोगः। तेन भिन्नेऽपि बाह्यप्रयत्ने सवर्णता न हीयते इत्यर्थः। तथा च ककारखकारयो-स्तुल्यमास्यं कण्ठः। तुल्यश्च आभ्यन्तरः प्रयत्नः स्पर्शः। बाह्यप्रयत्नस्तु ककारस्य अल्पप्राणः खकारस्य महाप्राणः इति भिन्न एव। तथाप्यनयोः सवर्णतास्ति ॥ यद्येवं किमिव बाह्यप्रयत्ननिरूपणे प्रयोजनम्? तदाह-'आन्तरतम्यपरीक्षायाम् उपयोक्ष्यन्ते' इति। एतच्च उपरिष्टात् स्फुटीभविष्यति ॥

दी—। कादयो मावसानाः स्पर्शाः। यरलवा अन्तःस्थाः। शषसहा ऊष्माणः। अचः स्वराः, ≍ क ≍ प इति कपाभ्यां प्राक् अर्द्धविसर्गसदृशौ जिह्वामूलीयोपध्मानीयौ। अं अः इत्यचः परावनुस्वारविसर्गौ। इति स्थानप्रयत्नविवेकः।

Letters beginning with क and ending with म are known as स्पर्शवर्ण; य, र, ल, व, are अन्तःस्था; श, ष, स, ह are ऊष्मन्; अच् letters are स्वर; letters looking like half a विसर्ग before क and प as in ≍ क and ≍ प are known as जिह्वामूलीय and उपध्मानीय respectively; अं, अः stand for अनुस्वार and विसर्ग after any vowel. Here ends the consideration of स्थान and प्रयत्न।

मित—। प्रागुक्तायां वृत्तौ 'स्पर्श' 'अन्तःस्था' 'ऊष्मन्' इत्यादयः शब्दाः प्रयुक्ताः। इह तेषामर्था निर्दिश्यन्ते। 'कादयो मावसानाः' इति वर्णानां लौकिको विन्यासो लक्ष्यते। तत्र वर्गीयाः पञ्चविंशतिः स्पर्शाः इत्यर्थः॥ 'अन्तःस्था' इत्याकारान्तः स्त्रीलिङ्गः शब्दः। लौकिके क्रमे स्पर्शानाम् ऊष्मणाञ्च अन्तः मध्ये तिष्ठन्ति इति अन्तःस्थाः॥ ऊष्मा वायुः। लक्षणया ऊष्मवन्त ऊष्माणः॥ 'अचः' इति शिवसूत्रक्रमनिर्देशः। एते 'स्वराः'॥ जिह्वामूलीयोपध्मानीयौ प्राग्व्याख्यातौ॥ अं अः इति यथाक्रमम् अनुस्वारविसर्गौ। 'अं' इत्युच्चारिते अकारात् परं यत्किञ्चित् संवृतं नादवत् घोषवच्च श्रूयते सः 'अनुस्वारः'। 'अः' इत्यकारात् परः विवृतः श्वासवान् अघोषस्य 'विसर्गः' श्रूयते। तावेतौ 'अचः परौ' स्वरमात्रात् परं भवतः न केवलमकारात्॥

दी—। "ऋॢवर्णयोर्मिथः सावर्ण्यं वाच्यम्" ( वार्त्तिक )।

It has to be stated that ऋ and ॡ are सवर्ण of each other.

मित—। ऋशब्दस्य प्रथमैकवचने आ इति रूपम्। आ च लृवर्णश्च ऋलृवर्णौ। तयोः। "ऋत्यकः" (९२—६।१।१२८) इति पाक्षिके प्रकृतिभावे ऋकारस्य न रेफः॥ ऋकारस्य मूर्द्धा लृकारस्य दन्ता इति स्थानभेदात् अप्राप्ता संज्ञा विधीयते॥

दी—। अकारहकारयोः इकारशकारयोः ऋकारषकारयोः ॡकारसकारयोश्च मिथः सावर्ण्ये प्राप्ते—

In accordance with the above अ and ह, इ and श, ऋ and ष, ऌ and स become सवर्ण of each other, which is not intended; so we look forward.

मित—। भाष्यमते ऊष्मणामीषद्विवृतः स्वराणां विवृतः प्रयत्न इति प्रयत्नभेदात् अकारादीनां हकारादीनाञ्च सवर्णताप्रसङ्गो नास्ति। सूत्रकारस्य पुनः स्वराणामूष्मणाञ्च तुल्यः प्रयत्नो विवृतः। अथ स्थानेऽपि तुल्यता सवर्णता एव प्राप्ता। तथा च कण्ठ्यौ अकारहकारौ, तालव्यौ इकारशकारौ, मूर्द्धन्यौ ऋकारषकारौ, दन्त्यौ ॡकारसकारौ मिथः सवर्णौ भवतः। तच्च नेष्यते इति प्रतिविधानमाह—

१२। नाज्झलौ ॥ १ । १ । १० ॥

दी—। आकारसहितः अच् आच् । स च हल् च इत्येतौ मिथः सवर्णौ न स्तः। तेन 'दधि' इत्यस्य 'हरति' 'शीतलम्' 'षष्ठम्' 'सान्द्रम्' इत्येतेषु परेषु यणादिकं न (?)। अन्यथा दीर्घादीनामिव हकारादीनामपि ग्रहणकशास्त्रबलात् अच्त्वं स्यात्। तथा हि—

Here आच् stands for the vowels in the Siva-Sutras together with आ। This and consonants are not to be deemed as सवर्ण of one another. Hence य is not substituted for इ in दधि when हरति, षष्ठम् or सान्द्रम् follows nor does सवर्णदीर्घ come in if शीतलम् follows. Otherwise (?) by virtue of the rule for the inclusion of सवर्ण letters ह &c. also become अच् just as the दीर्घ and प्लुत vowels are. Thus—

मित—। भाष्यमते स्वरव्यञ्जनयोः प्रयत्नभेदादेव सवर्णता नास्ति तत् व्यर्थमिदं सूत्रम् ॥ न आज्झलौ इति च्छेदः। आच् हल् इत्येतयोर्द्वन्द्वः। तत्र आच् शब्दं व्याचष्टे आकारसहितः अच् इति। नैतद्विग्रहवाक्यम्। तथा सति सहितपदलोपेऽपि कार-प्रत्ययस्य लोपो न स्यात्। आ-सहितः अच् इति विग्रहः। शाकपार्थिववत् समासः। आकारश्च अच् च इति द्वन्द्वस्तु परिहृतः। समाहारे "द्वन्द्वाच्—" (९३०) इति समासान्तेन टचा आचम् इति भवति ततः पुनर्द्वन्द्वे आचहलौ इत्यनिष्टं प्रसज्यते। इतरेतरे च आचौ इति जाते पुनर्द्वन्द्वे आज्हलः इति बहुवचनप्रसङ्गः। त्रिपदे द्वन्द्वेऽपि स एव दोषः॥ अच् च हल् च इति द्वन्द्वे "जातिरप्राणिनाम्" (९१०) इति समाहारे अज्झलम्। तत आ च अज्झलञ्च इति पुनर्द्वन्द्वे आज्झले इति रूपं स्यात्। अर्थश्च भिद्येत। आकारस्य हल्भिरिव अज्भिरपि सवर्णता न स्यात्। तत् यथोक्त एव युक्तो विग्रहः॥ अतःपरं तेन दधि' इत्यादिकं 'यणादिकं न' इत्यन्तं प्रक्षिप्तमिवाभाति। "इको यणचि" (४७) इति यण्विधायकं सूत्रम्। तत्र यणादेशं प्रति निमित्तम् 'अच्' न सवर्णता। अतः 'सवर्णौ न स्तः तेन...यणादिकं न' इत्यसङ्गतम्। अचिकमये॥ 'अन्यथा दीर्घा—' इत्यत्र 'अन्यथा' इति अनन्तरोक्तस्य विपरीतं पक्षमवतारयति। यथा मुद्रितेषु मूलेषु दृश्यते तथा 'यणादिकं न'

इत्येव अनन्तरोक्तः पक्षः। तत्र 'अन्यथा' इत्यस्य 'सति यणादिके' इत्यर्थो जायते। 'सति यणादिके अच्त्वं स्यात्' इति प्रलाप एव 'सति अच्त्वे यणादिकं स्यात्' इति हि तत्त्वम्। अत उच्यते तेन इत्यादिकमनन्तरोक्तं प्रक्षिप्तमिति। 'अच्त्वं स्यात्' इत्यतः परमपि 'तेन दधि' इत्यादि न सुवचम्। परवर्त्ति 'तथा हि' इत्यनेन 'अचत्वं स्यात्' इत्यस्य हेतुरुपन्यस्यते। तदनयोरन्तरा यणादिकं न' इति दुःस्थितमेव॥ अपनीते प्रक्षिप्ते 'सवर्णौ न स्तः अन्यथा' इति हि प्रकरणम्। तत्र 'अन्यथा' इत्यस्य 'सति सवर्णत्वे' इत्यर्थः। अकारादयो यदि हकारादिभिः सवर्णाः तदा हकारादयोऽपि अचु अन्तर्भवन्ति। तेन 'दधि हरति' इत्यत्र 'ह' इति इकारस्य असवर्णः अच् इति इकारस्य यकारादेशः स्यात्। 'दधि शीतलम्' इत्यत्र 'श' इति सवर्णः अच् इति इकार शकारयोः 'ई' इति दीर्घ एकादेशः स्यात्। 'दधि षष्ठम्' इत्यादिष्वपि इकारस्य यकारो भवेत् इति बहवः किल दोषाः॥ ननु 'अच्' इति शिवसूत्रस्थितानां स्वराणामेव संज्ञा। तत् अकारादय एव अचः। न च तेषां सवर्णा अपि हकारादयः। नैवम्। यदि अकारादिभिः आकारादयः सवर्णा गृह्यन्ते कथं नु हकारादयो न गृह्येरन्? आकारादीनामपि कुतो वा ग्रहणम्? 'ग्रहणकशास्त्रबलात्'। ग्रहण' हि वर्णानां साक्षादुच्चारणम्। तत् सादृश्यात् स्वाभिधेयेन वर्णान्तरस्य व्यापनं 'ग्रहणकम्'। "संज्ञायाम्" कन् (२०३०) इति इवार्थे कन्। 'ग्रहणकस्य' अन्तर्भावनस्य यत् शास्त्र" तस्य यत् 'बल" तस्मात् सवर्णानां ग्रहणम्। किं तत् सूत्रमित्याह 'तथा हि' इति॥

## १४। अणुदित् सवर्णस्य चाप्रत्ययः॥ १। १। ६९॥

**दी—। प्रतीयते विधीयते इति प्रत्ययः। अविधीयमानः अण् उदिच्च सवर्णस्य (च?) संज्ञा स्यात्। अत्र 'अण्' परेण णकारेण। कु, चु, टु, तु, पु एते उदितः। तदेवम्—'अ' इत्यष्टादशानां संज्ञा। तथा इकारोकारौ। ऋकारस्त्रिंशतः। एवं लृकारोऽपि। एचो द्वादशानाम्।**

That which is reached or enjoined is a प्रत्यय। Any of the letters अण् in the Siva.Sutras except when it is a प्रत्यय, also any letter with उ attached to it is a संज्ञा of itself as well

as of all other letters that are सवर्ण with it. Here the ण in अण् is not the final in the first of the Siva Sutras but the subsequent one at the end of लण्। Thus it includes अ, इ, उ, ऋ, ऌ, ए, ओ, ऐ, औ, ह, य, व, र, ल, 14 altogether. By उदित् are meant कु, चु, &c. These stand for कवर्ग, चवर्ग &c. The rule therefore makes अ the designation for 18 varieties (No 9). Similarly इ and उ। ऋ Stands for 30, viz, its own 18 and the 12 of ऌ because ऌ is a सवर्ण of ऋ। Similarly for ऌ। अच्, *i. e.* ए, ओ, ऐ, औ stand for 12 varieties each (No. 9.)

मित—। प्रतीयते इत्यादिना प्रत्ययशब्दो व्युत्पाद्यते। प्रतिपूर्वादिण्धातोः कर्मणि अच्। यदेव किञ्चित् विधीयते आगमो वा आदेशो वा प्रत्ययो वा तदेवेह प्रत्ययशब्दस्यार्थः॥ 'उत्' ह्रस्वउवर्णं इत् यस्मात् यस्य वा स 'उदित्'॥ पूर्वसूत्रात् 'स्वं रूपम्' इत्यनुवर्तते षष्ठ्या च विपरिणम्यते। अप्रत्ययः अण् उदिच्च स्वस्य रूपस्य सवर्णस्य च इत्यन्वयः। अणादयः अ-प्रभृतीनां तथा अ-प्रभृतीनां ये सवर्णाः तेषामपि संज्ञा॥ इह वृत्तौ 'सवर्णस्य' इत्यतः परं लिपिकरप्रमादात् 'च' इति स्खलितम्। असति चकारे स्वस्य रूपस्य ग्रहणं न स्यात्॥ शिवसूत्रेषु इत्संज्ञको णकारः द्विः पठितः। इह तु परेण प्रत्याहारः 'अण्' इति। "पूर्वेणैवाण्ग्रहाः सर्वे परेणैवेण्-ग्रहा मताः ऋतेऽणुदित्सवर्णस्येत्येकमेव परेण तु॥" तत् 'अण्' इति अ, इ, उ, ऋ, ऌ, ए, ओ, ऐ, औ, ह, य, व, र, ल इति चतुर्दशानां संज्ञा॥ 'कु' इत्यादिषु उकार इत् 'क्' इत्यादि शिष्यते। स्वंरूपमिह 'क्' इत्यादि। अकृतेऽस्मिन् सूत्रे 'कु' इत्यादिभिः 'क्' इत्यादय एव गृह्येरन् नान्यत् किञ्चित्। कृते तु सूत्रे 'कु' प्रभृतयः कवर्गादीनां ग्राहका भवन्ति॥ अष्टादशानामिति "मुखनासिका—" (९—१।१।८) इत्यत्र प्रदर्शितम्। त्रिंशत इति ऋ ऌवर्णयोः सावर्ण्यात् (१२, वार्त्तिक)॥

**दो—। एदैतोरोदौतोश्च न मिथः सावर्ण्यम्। "ऐ औच्" इति सूत्रारम्भसामर्थ्यात्। तेन एचश्चतुर्विंशतेः संज्ञाः स्युरिति नापादनीयम्।**

ए and ऐ are not सवर्ण of each other, nor are ओ and औ। If they were, the rule "ऐ औ च्" would be unnecessary because ऐ

and औ could be got from ए and ऐ by this rule. Hence the view that एच् letters designate 24 varieties each should not be adopted, so we say each of एच् stands for 12 varieties only.

मित—। एकारस्य ऐकार ओकारस्यापि औकारो न सवर्णः। यदि स्यात् 'ऐ औच्' इति सूत्रं न कृतं स्यात्। 'ए ओ ङ्' इत्येतेनैव सवर्णग्रहणात् ऐ-औ-चोरपि प्राप्तेः। अत्रार्थे न केवलं शिवसूत्रकृतः प्रवृत्तिर्लिङ्गम् पाणिनिश्च पतञ्जलिश्च प्रमाणम्। तथाच शिक्षा—"तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च" इति। अस्यार्थः "अकारादिभ्य एङौ विवृततरौ, एङाभ्यामपि विवृततरौ ऐचौ" इति। एवं हि एङैचोः प्रयत्नो भिद्यते। प्रयत्नभेदात् सावर्ण्यमनयोर्नास्ति। भाष्येऽपि एङोरकारश्रुतिरस्ति इत्युक्त्वा ऐचोर्विवृततरश्रुतिरुक्ता। तत् स एव प्रयत्नभेदः॥ सति सवर्णत्वे चतुर्विंशतेः संज्ञा भवति अन्यथा यथोक्तं प्रत्येकं द्वादशानाम्। आपादनीयम् उपस्थापनीयम्। चतुर्विंशतेः संज्ञा इति न वक्तव्यमित्यर्थः॥

**दी—। "नाज्झलौ" (१३) इति सावर्ण्यनिषेधो यद्यपि आक्षरसमाम्नायिकानामेव तथापि हकारस्य आकारो न सवर्णः। तत्र आकारस्यापि प्रश्लिष्टत्वात्। तेन 'विश्वपाभिः' इत्यत्र "हो ढः" (३२४—८।२।२।३१) इति ढत्वं न भवति।**

The rule "नाज्—" (13) prohibits the सवर्णता of those letters only that appear in the list of letters known as शिवसूत्र। The letter आ is not there ; hence apparently आ and ह become सवर्ण in spite of that rule. The fact, however, is that the rule has आ also incorporated into it as already explained. Consequently the prohibition holds and आ and ह are not सवर्ण। So ह does not include आ and in विश्वपाभिः the rule "हो ढः" does not operate, आ does not change into ढ।

मित—। समाम्नायः आवृत्तिः। मनतेर्भावे घञ्। अक्षराणां समाम्नायः शिवसूत्राणामावृत्तिः अक्षरसमाम्नायः। तत्र भवा इति आक्षरसमाम्नायिकाः। "बह्वचोऽन्तोदात्तात्—" (१४४६) इति ठञ्। शिवसूत्रस्थिता वर्णा इत्यर्थः॥ इह

"तुल्यास्य—" ( १० ) इति विधानं सवर्णतायाः, "नाज्झलौ" इति निषेधः। एवं सूत्रद्वयेन विधिनिषेधाभ्यां व्यवस्थापिते एव सवर्णत्वे "अणुदित्—" इति ग्रहणक-सूत्रं प्रवर्त्तते। तदत्र व्यवस्थापनं प्रति "अणुदित्—" सूत्रस्य प्रवृत्तिर्नास्ति। अन्यथा सवर्णतामाश्रित्य ग्रहणकप्रवृत्तिः ग्रहणकमाश्रित्य च सवर्णता इत्यन्योऽन्याश्रयः प्राप्नोति। इत्थं "नाज्झलौ" इति निषेधसूत्रे यदज्ग्रहणं तेन शुद्धाः शिवसूत्रस्थिता कण्ठा गृह्यन्ते न च तेषां सवर्णा अपि। तदाह 'आक्षरसमाम्नायिकानामेव' इति॥ यद्येवं शुद्धानामेव अचां स निषेधः नान्येषाम्। आकारेण तर्हि अचा हकारस्य हलः सावर्ण्यं स्यात्। अन्येतरग्रहणेन च अनयोरितरदपि गृह्येत। तेन हकारस्य विधिराकारस्यापि प्रसज्येत। ततो भकारे परे हकारस्य यत् ढत्वं तत् 'विश्वपाभिः' इत्यत्र आकारस्यापि भवेत्। दोषस्यास्य परिहारमाह 'तत्र' तस्मिन् "नाज्झलौ" इति निषेधसूत्रे 'आकारस्यापि प्रश्लिष्टत्वात्' इति। स च प्रश्लेषः 'न आ अच्' इत्यादिना प्राग्व्याख्यातः। तेन आकारस्यापि सवर्णता निषिद्धा भवति दोषश्च नापद्यते॥ वस्तुतस्तु यथोत्तरं मुनीनां प्रामाण्यमिति भाष्यमेवात्र मानम्। तेन स्वराणामूष्मणाञ्च भाष्योक्तं प्रयत्नभेदमाश्रित्य "नाज्झलौ" इति सूत्रं त्याज्यम् आकार प्रश्लेषक्लेशश्च न कार्यः प्रतिभाति॥

**दी—। अनुनासिकाननुनासिकभेदेन यवला द्विधा। तेन अननुनासि-कास्ते द्वयोर्द्वयोः संज्ञा।**

य, व, ल are of two kinds, nasal and non-nasal. Hence each of these in the non-nasal form stands for two varieties including the nasal also.

मित—। अण्सु हयवरला गृहीताः। तत्र रेफहकारयोरप्रसिद्धा अनुना-सिकता। यवलास्तु अनुनासिका अपि दृश्यन्ते। किञ्च मुखाद्दिर्नासिका इति तया उच्चार्यमाणोऽपि वर्णो आस्ये समतां न जहाति, तेन सत्यप्यनुनासिकत्वे शुद्धस्य वर्णस्य सवर्ण एव सः। अतः शुद्धा यवलाः सवर्णान् अनुनासिकानपि यवलान् गृह्णन्ति॥

**१५। तपरस्तत्कालस्य॥ १। १। १०॥**

**दी—। तः परो यस्मात् सः, तात् परश्च, उच्चार्य्यमाण-समकालस्यै व**

संज्ञा स्यात्। तेन 'अत्' 'इत्' 'उत्' इत्यादयः षण्णां षण्णां संज्ञा। 'ऋत्' इति द्वादशानाम्।

A letter contiguous to त *i. e.*, one which precedes or follows त, designates one which has the same time measure with it—designates itself only. Thus अत्, इत् &c. have six varieties only, excluding the long and the prolate. ऋत् stands for 12, including the varieties of ऌ also.

मित—। अत्र 'काल' इति उच्चारणक्रियया व्याप्तः कालः, 'मात्रा' इति प्रसिद्धः। 'तस्य' निर्दिश्यमानस्य वर्णस्य 'कालः' तत्कालः। तत्काल इव कालो यस्य स तत्कालः। उत्तरपदलोपी बहुव्रीहिः॥ 'तपरः' इति बहुव्रीहिश्च पञ्चमी तत्पुरुषश्च इत्युभयथा नेयः। तदाह 'तः परो यस्मात्' इत्यादि। यथाव्याख्यानं क्वचित् बहुव्रीहिः क्वचिच्च तत्पुरुषः। बहुव्रीहिणा तत्पुरुषेण वा व्याख्यातस्तपरो वर्ण आत्मन एव संज्ञा न सवर्णस्य च इति फलितम्॥ 'अत्' इति ह्रस्वादवर्णात् परस्तकारः। तदयं ह्रस्वस्यैव अकारस्य एकमात्रस्य ग्राहकः, न दीर्घस्य द्विमात्रस्य न वा प्लुतस्य त्रिमात्रस्य। एष तु उदात्तादिभेदेन, त्रिधा भिद्यते, अनुनासिकत्वेन च द्विधा इत्याह 'षण्णां संज्ञा' इति। ऋकारस्तु सवर्णस्य ऌकारस्यापि ग्राहकः, तेन 'ऋत्' इति 'द्वादशानाम्॥

## १६। वृद्धिरादैच्॥ १। १। १॥

दी—। आत् ऐच्च वृद्धिसंज्ञः स्यात्।

आ, ऐ, औ are understood by the word *Vriddhi.*

मित—। वृद्धिरिति संज्ञा। आत् इति आकारः, स चेह संज्ञी। 'ऐच्' इति ऐ औ संज्ञिनावेव॥ वृद्धिः आत् ऐच् इति त्रीणि पदानि, न समासः। सौत्रश्च-कारस्य ककाराभावः॥ आ, ऐच् इत्येतौ वृद्धिशब्देन निर्दिश्येते इत्यर्थः। वृद्धिरिति आ ऐ औ इति त्रयाणां संज्ञा॥ इह असति तकारे आ ऐच् इति संहितया ऐजित्येव रूपं भवति, तत्र सन्देहः शुद्धोऽयमैच्, आ ऐच् इति वा। सन्देहो मा भूत् इति त-परः कृतः, न तु तत्कालपरिग्रहार्थः। शिवसूत्रेषु आकारो नैव पठ्यते, तत् तेन

कालान्तरग्रहणस्य प्रसङ्गो नास्ति। किन्तु क्वते तकारे 'ऐच्' इति तात्परो भवति। तेन वृद्धिशब्देन विहित ऐकार औकारश्च तत्काल एव द्विमात्र एव इत्यर्थः॥

१७। अदेङ् गुणः॥ १। १। २॥

दी—। अत् एङ् च गुणसंज्ञः स्यात्।

अ, ए, ओ are styled *Guna*.

मित—। प्राग्वत् गुण इति संज्ञा, अ, ए, ओ इति संज्ञिनः॥ इह असन्देह इत्येकं प्रयोजनं तकारस्य। अपि तु तः परो यस्मादिति अकारोऽयं तपरः, तात्पर इति क्वत्वा एङ् च। उभयत्र तत्कालस्य ग्रहणम्। तेन गुणशब्देन यः अकारः क्रियते स एकमात्र एव न कदापि द्विमात्रो वा त्रिमात्रो वा। यः पुनरेकार ओकारो वा स द्विमात्र एव। तथा हि हिम ऋतु हिमर्तु, चला ऋद्धि चलर्द्धि इत्यादिषु एकमात्र आदेशः। दुर्गा इति दुर्गेति इत्यादिषु च द्विमात्रः त्रिमात्रः॥

१८। भूवादयो धातवः॥ १। ३। १॥

दी—। क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः।

Words designating *action* and listed with भू leading are called धातु।

मित—। भूश्च वाश्च भूवौ। आदिशब्दः प्रभृतिवाची प्रकारवाची च। तयोः आदिश्च आदिश्च इत्येकशेषे आदी। तत्र प्रथमस्तावत् भू इत्यनेन सम्बध्यते। भ्वादयो भू-प्रभृतयः ये भू इत्युपाध्य पठ्यन्ते। द्वितीयस्तु 'वा' इत्यनेन सम्बद्धः। वादयो वा-प्रकाराः वा-सदृशाः। वा गतिगन्धनयोरित्यदादिषु पठ्यते। तत्र गतिर्गन्धनञ्च क्रियाविशेषः। सादृश्यं क्रियावाचित्वेन, तेन वा-सदृशा इत्यस्य 'क्रियावाचिनः' इत्यर्थः। भूवौ आदी येषां ते भूवादयः। भूप्रभृतयो वा-सदृशा इत्यर्थः। वा-सदृशाः क्रियावाचिन इति यावत् ये भूसत्तायामिति प्रक्रम्य पठिताः ते धातुसंज्ञाः स्युः इति सूत्रार्थः॥ क्रियावाचिनः किम्? या इत्यदादिषु पठ्यते तथापि यच्छब्दस्य स्त्रियां या इति यत् प्रातिपदिकं तस्य धातुत्वं मा भूत्॥ भ्वादयः किम्?

हिरुक् पृथक् इत्यादीनां क्रियाप्रधानानामव्ययानां धातुषु अपठितानां धातुसंज्ञा मा भूदिति ॥

१९। प्राग्रीश्वरान्निपाताः ॥ १ । ४ । ५६ ॥

दी—। इत्यधिकृत्य—

Having taken up the subject of निपात with the declaration "Every thing that is introduced until रीश्वर is uttered is to be called a निपात"—

मित—। 'रीश्वर' इत्युच्चारणात् 'प्राक्' ये इत ऊर्ध्वमुपस्थापयिष्यन्ते ते 'निपाताः' निपातसंज्ञका वेदितव्याः, 'इति' अनेन प्रकारेण 'अधिकृत्य' अधिकृतत्त्वेन विषयत्वेन प्रस्तुत्य निपाता उच्यन्ते इति वाक्यशेषः ॥ "चादयोऽसत्त्वे" (२०) इति च शब्दादारभ्य "अधिरीश्वरे" (६४४) इति रीश्वर शब्दात् प्राक् अधिशब्दं यावत् निपाताः संख्याताः ॥

२०। चादयोऽसत्त्वे ॥ १ । ४ । ५७ ॥

दी—। अद्रव्यार्थाश्चादयो निपातसंज्ञाः स्युः।

Words listed with च leading are called निपात not meaning a substance.

मित। च-शब्द आदौ आदिर्वा येषां ते चादयः चादिगणः। सत्त्वं द्रव्यम्। असत्त्वे इति प्रसज्य प्रतिषेधः। न तु सत्त्वे इत्यर्थः। चादयो निपातसंज्ञाः स्युः, सत्त्वे अर्थे वर्त्तमानास्तु न इति सूत्रस्याशयः। एवमेव भाष्यं वृत्तिश्च। तथा च कौस्तुभे दीक्षितोऽपि। नागेशस्तु 'असत्त्वे' सत्त्वादन्यत्र इति पर्य्युदासमाह। तन्मते 'अद्रव्यार्थाः' द्रव्यव्यतिरिक्तार्था इत्यर्थः॥ असत्त्वे किम्? 'वा' इति चादिषु पठ्यते। विकल्पार्थं तत् निपातसंज्ञकं भवति। यदा पुनर्वातीति वा इति क्विबन्तो वा-शब्दो व्युत्पाद्यते तदा क्रियाधारः सन् द्रव्यवचनोऽसौ न निपातः॥

२१। प्रादयः ॥ १ । ४ । ५८ ॥

दी—। अद्रव्यार्थाः प्रादयस्तथा।

Words listed with प्र leading are the same ( निपात ) if not designating a substance.

मित—। 'असत्त्वे' इत्यस्ति। तदाह 'अद्रव्यार्थाः' इति। 'प्रादयः' इति प्रादिगणः। 'तथा' इति निपातसंज्ञा इत्यर्थः॥ असत्त्वे किम्? 'वि' इति प्रादिषु पठ्यते। वैशिष्ट्यद्योतकं तत् निपातसंज्ञकं भवति। अस्ति पुनः पक्षिपर्य्यायो वि-शब्दः। स तु न निपातः।

## २२। उपसर्गाः क्रियायोगे॥ १। ४। ५८॥

( See next—व्याख्यातमुत्तरत्र )

## २३। गतिश्च॥ १। ४। ६०॥

**दी—। प्रादयः क्रियायोगे उपसर्गसंज्ञा गतिसंज्ञाश्च स्युः। प्र, परा, अप, सम्, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उत् ( ? उद् ), अभि, प्रति, परि, उप—एते प्रादयः।**

Words of the प्रादि class are also called उपसर्ग, and गति as well, when are connected with some क्रिया। The प्रादि words are प्र &c.

मित—। निपाता इत्यधिकृतम्। 'प्रादय' इत्यनुवर्त्तते। क्रिया धात्वर्थः। क्रियया योगः क्रियायोगः। यदा प्रादयो धात्वर्थं द्योतयन्ति तदा तेषां क्रियायोगः॥ प्रादयो निपाताः क्रियायोगे उपसर्गसंज्ञा भवन्ति इत्यन्वयः॥ उत्तरत्र 'प्रादयः क्रियायोगे' इत्यनुवर्त्तते। प्रादयः क्रियायोगे गतिः इति च उच्यन्ते इत्यन्वयः। च-कारात् उपसर्ग इत्यपि॥ "निरः कुषः" "निसस्तपतौ—" इत्यादिनिर्द्देशात् रान्तता सान्तता च। अयतेर्लटि निरयते-निलयते दुरयते-दुलयते इति रूपभेदाच्च तथैव प्रतिपत्तिः॥ 'उत्' इति तकारान्तपाठो लिपिकरप्रमादजः। दान्तोऽयं शब्दः। अन्यथा "उदश्चरः सकर्मकात्" "उदि कूले रुजिवहोः" इत्यादयो निर्देशा नोपपद्यन्ते। तकारान्ते हि "उतश्चरः" "उति कूले" इत्यादिप्रसङ्गः॥

## २४। न वेति विभाषा॥ १। १। ४४॥

**दी—। निषेधविकल्पयोर्विभाषासंज्ञा स्यात्।**

A negation and an option combined is designated by the word विभाषा।

मित—। 'न' इति निषेधे 'वा' इति विकल्पे अव्ययम्। मिलिताभ्यामेताभ्यां निषेधविकल्पयोः संप्रत्ययो भवति। स एव 'न वा' इति सङ्घातस्य अर्थः। तस्य अर्थस्य इह विभाषा इति संज्ञा क्रियते। यदि 'न वा' शब्दस्यैव संज्ञा इष्टा स्यात् 'इति' शब्दो नोच्येत "न वा विभाषा" इत्येव सूत्रं स्यात् "क्तक्तवतू निष्ठा" इत्यादिषु यथा॥ विभाषास्थलेषु प्रथमं निषेधस्य प्रवृत्तिः पश्चाद्विकल्पस्य प्रतिषेधेन समीकृते विषये पश्चाद्विकल्पः प्रवर्त्तते" इति वृत्तिः॥

## २५। स्वं रूपं शब्दस्याशब्दसंज्ञा॥ १। १। ६८॥

**दी—। शब्दस्य स्वं रूपं संज्ञि, शब्दशास्त्रे या संज्ञा तां विना।**

Here a word designates its own form excepting words that are used as संज्ञा in grammar.

मित—। इह शास्त्रे शब्दान् उच्चार्य्य कार्य्यमुपदिश्यते। श्रुते च शब्दे अर्थस्य कस्यचिद्बोधो जायते। अर्थे तु कार्य्यस्य असम्भवः। तत् अर्थस्य तस्य वाचके कृत्स्नेऽपि शब्दसमूहे कार्य्यमापद्यते। तन्नियमः क्रियते उच्चारितस्य 'शब्दस्य' यत् 'स्वं रूपम्' आकृतिः तदेवेह विषयत्वेन बोध्यम्। एवम् "अग्नेर्ढक्" इत्युक्ते अकारगकारनकारिकाराणां समुदायरूपा या आकृतिः ततः एव ढक्प्रत्ययः क्रियते, न तु अनलदहनहुताशनादिरूपाणामपि। तदेष निष्कर्षः—इह शास्त्रे अग्निप्रभृतिभिः शब्दैः स्वं रूपमेव संज्ञायते न पुनः पर्य्यायरूपमपि। शब्दः संज्ञा 'शब्दस्य स्वंरूपं संज्ञि'॥ यद्येवं 'निष्ठा' इति नकारिकारषकारठकाराकाररूपस्य समुदायस्य संज्ञा भवतु, मा च भूदनेन क्तक्तवत्वोर्ग्रहणम्। तत्राह 'अशब्दसंज्ञा' इति। शब्द इति शब्दशास्त्रं व्याकरणमित्यर्थः। शब्दे संज्ञा शब्दसंज्ञा व्याकरणे कृता संज्ञा। न शब्दसंज्ञा अशब्दसंज्ञा। शब्दस्य अशब्दसंज्ञा स्वं रूपं ग्राह्यम् इत्यन्वयः। 'शब्दशास्त्रे या संज्ञा तां विना शब्दस्य' यत् 'स्वं रूपं' तत् 'संज्ञि' इत्यर्थः॥

## २६। येन विधिस्तदन्तस्य॥ १। १। ७२॥

**दी—। विशेषणं तदन्तस्य संज्ञा स्यात्, स्वस्य च रूपस्य।**

Any characteristic, through which an injunction operates,

designates itself and also the whole of which it is the final portion.

मित—। "अणुदित् सवर्णस्य च—" इत्यतः 'च' इत्यनुवर्त्तते। 'संज्ञा' इति च प्रकरणाल्लभ्यम्। "तदन्तस्य च संज्ञा, येन विधिः" इत्यन्वयः। च-कारेण 'स्वंरूपम्' इत्यस्य समुच्चयः षष्ठ्या च विपरिणामः। तेन अयमर्थः—'येन' द्वारेण 'विधिः' प्रवर्त्तते तत् 'तदन्तस्य' आत्मान्तस्य 'स्वस्य च रूपस्य संज्ञा' स्यात्। येन इति करणे तृतीया। द्वारमिह प्रवृत्तौ करणम्॥ विधिरिति कर्मणि किप्रत्यय इति न्यासपदमञ्जरीकौस्तुभादयः। नागेशस्तु विधानं विधिरिति भावे प्रत्ययमाह। भावपक्ष एव भाष्याभिमतः प्रतिभाति। तथाचेह भगवान् "अचा धात्तोर्यतं विधत्ते, अकारेण प्रातिपदिकस्य इञं विधत्ते" इति तिङन्तमुदाहरति। तत्तु "यतो विधानम्" "इञो विधानम्" इत्यादीनामेव युक्तः अनुवादः। द्वारविशिष्टविषये एव विधेः प्रवृत्तिः। तेन द्वारं विधेर्विषयस्य विशेषणम्। तदाह 'विशेषणं तदन्तस्य' इत्यादि॥ "स्वं रूपम्—" इति स्वस्यैव प्राप्तः तदन्तस्यापि विधीयते। तेन स्वरूपविधिस्तदन्तविधिश्च भवति।

दी—। "समासप्रत्ययविधौ प्रतिषेधः" ( वार्त्तिक )।

This has to be prohibited in case of Injunctions relating to समास and प्रत्यय I Such injunctions apply to the characteristics only and not also to what ends in them.

मित—। समासविधौ प्रत्ययविधौ च येन विधिः तत् स्वस्यैव रूपस्य संज्ञा स्यात् न तदन्तस्यापि इत्यर्थः॥ समासे तावत्—"द्वितीया श्रित—" इति श्रितशब्देन करणेन समासविधिः। तत् श्रितशब्देनैव समासः कष्टं श्रितः कष्टश्रितः इति। श्रितान्तेन कष्टं परमश्रित इत्यत्र समासो न भवति॥ प्रत्यये च—"नडादिभ्यः फक्" इति नड़शब्दात् फगुत्पद्यते, नड़स्य अपत्यं नाडायन इति न तु नडान्तादपि सूत्रनड़स्य अपत्यमित्यत्र। तत्र तु यथाविहितम् इञेव सौत्रनाडिरिति॥ इह तदन्तविधेः प्रतिषेधात् स्वरूपविधिरेव केवलो भवति॥

दी—। "उगिद्वर्णग्रहणवर्जम्" ( वार्त्तिक )।

There is no prohibition when the characteristic drops उ, ऋ or ऌ or a single letter.

मित—। उक् इति प्रत्याहारः। उक् इत् यस्मात् स उगित्। उगिच्च वर्णश्च उगिद्वर्णौ। तयोर्ग्रहणम्। उगिद्वर्णग्रहणं वर्जयित्वा इति उगिद्वर्णग्रहणवर्जम्॥ समासस्य प्रत्ययस्य वा उगिता केनचित् शब्देन करणेन, वर्णेन वा केनचित्, यदा विधिः तदा नास्ति तदन्तविधेः प्रतिषेधः। स हि विधिः उगितः उगिदन्तस्य च वर्णस्य वर्णान्तस्य च स्यात्॥ समासे—महच्छब्दः शतृवद्भावादुगित्। तस्य "सन्महत्—" इति समासे महावैयाकरण इति भवति। अतिक्रान्तो महान्तम् अतिमहान् इति उगिदन्तः। अस्यापि स एव समासः अतिमहावैयाकरण इति॥ समासे वर्णग्रहणं नास्ति॥ प्रत्यये—उगित्स्वरूपस्य महच्छब्दस्य स्त्रियाम् "उगितश्च" इति ङीप्, महती। किञ्च अतिक्रान्तो महान्तम् अतिमहान्। स्त्रियाम् तदन्तविधिना प्राग्वत् ङीपि अतिमहती॥ "एरच्", "अत इञ्" इत्यादयो वर्णग्रहणानि। इस्वरूपस्य इण् गतौ इति धातोरच्प्रत्यये अयः। तथा च तदन्तविधिना इदन्तस्य चिधातोरच् प्रत्यये चयः॥

## २७। विरामोऽवसानम्॥ १। ४। ११०॥

दी—। वर्णानामभावः अवसानसंज्ञः स्यात्।

A break in the suceession of letters is called अवसान।

मित—। विरामो विरतिः। भावे घञ्। पूर्णे शब्दकलेवरे उच्चारण-विरतिर्भवति। तस्या अवसानसंज्ञा क्रियते।

## २८। परः सन्निकर्षः संहिता॥ १। ४। १०९॥

दी—। वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात्।

Close proximity of letters is called संहिता।

मित—। अतिशयित इति परशब्दस्य व्याख्यानम्। स्वभावादधिकः अति-शयितः। अर्द्धमात्राकालव्यवधानं संहितासंज्ञं भवतीति वृत्तिः।

२९। सुप्तिङन्तं पदम् ॥ १ । ४ । १४ ॥

दी—। सुबन्तं तिङन्तञ्च पदसंज्ञं स्यात् ।

A पद is one that ends in either a सुप् or a तिङ् ।

मित—। 'सुप्' इति "स्वौजस्—" इत्यत्र सु शब्दादारभ्य आ सुपः पकारात् प्रत्याहारः। 'तिङ्' इति च "तिप्तस्—" इत्यत्र ति शब्दात् महिङो ङकारात् प्रत्याहारः ॥

३०। हलोऽनन्तराः संयोगः ॥ १ । १ । ७ ॥

दी—। अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः।

Consonants unseparated by vowels are called संयोग ।

मित—। हल इति व्यञ्जनानि। बहुवचनमतन्त्रम् जात्यभिप्रायेण वा। अन्तरमवकाशः। अविद्यमानमन्तरमेषु अनन्तराः। अचः स्वराः। तैः अव्यवहिताः ॥ द्वयो द्वयोर्व्यञ्जनयोरन्तरा स्वरविरहिता इत्यर्थः। अग्भिरिति युक्तम् ॥ अनन्तरा इति नकारतकारयोर्मध्ये अच् नास्ति इति तयोरेकः संयोगः। बहूनामपि हलामानन्तर्य्ये द्वयोर्द्वयोः संज्ञा। यावन्मात्रेण सिद्धमानन्तर्य्यं तावन्मात्रेणैवोत्पन्ना संज्ञा तद् बहूनां सन्निधाने एकाधिक एव संयोगः ॥ लब्ध्वा इति बकारधकारयोरेकः, धकारवकारयोरपर इति द्वौ संयोगौ ॥

३१। ह्रस्वं लघु ॥ १ । ४ । १० ॥

A short vowel is called लघु ।

मित—। "ऊकालोऽच्—" (४—१।२।२७) इति ह्रस्वत्वादिकं स्वरधर्मः। यत् ह्रस्वं तत् लघु इत्युच्यते ॥

३२। संयोगे गुरु ॥ १ । ४ । ११ ॥

दी—। संयोगे परे ह्रस्वं गुरुसंज्ञं स्यात् ।

A short vowel is styled गुरु if a संयोग follows.

मित—। 'ह्रस्वम्' इत्यनुवर्त्तते। 'संयोगे' इति परसप्तमी। ह्रस्वं संयोगे परे

गुरु इत्यन्वयः॥ अनन्तर इत्यत्र 'अ' इति लघु। अन्त इत्यत्र तु 'न्त' इति संयोगे परे 'अ' इति गुरु। 'कृष्ण' इति कृ शब्दे अकारो गुरुः॥

### ३३। दीर्घञ्च॥ १। ४। १२॥

दी—। दीर्घञ्च गुरुसंज्ञं स्यात्।

A long vowel also is styled गुरु।

मित—। यत् दीर्घं तच्च गुरु। 'दीर्घं' इति दी-शब्दे ईकारो गुरुः॥ सानुस्वारं सविसर्गञ्च गुरु। 'संयोगः' इति 'सं' शब्दे अकारो गुरुः गः-शब्दे च॥

## अथ परिभाषाप्रकरणम्।

### ३४। इको गुणवृद्धी॥ १। १। ३॥

दी—। गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते तत्र 'इकः' इति षष्ठ्यन्तं पदमुपतिष्ठते।

The word इकः in the षष्ठी has to be supplied where गुण or वृद्धि is enjoined by mentioning the word गुण or वृद्धि।

मित—। इक्शब्दस्य षष्ठ्या एकवचने रूपम् 'इकस्' इति। तस्य अनुकरणम् 'इकस्' इति शब्दरूपं नपुंसकलिङ्गम्। प्रथमैकवचने इह रूपम्॥ गुणश्च वृद्धिश्च गुणवृद्धी। तौ। अनुवर्त्तते उपतिष्ठते इत्यादि क्रिया ऊह्या। कर्मणि द्वितीया-द्विवचने रूपम्॥ 'इकः' इति गुणवृद्धि-शब्दौ अनुवर्त्तते। यत्रोच्यते गुण इति वृद्धिरिति वा तत्र इक इत्यप्युपस्थितं वेदितव्यम्। तदाह 'गुणवृद्धिशब्दाभ्याम्' इत्यादि॥ 'गुणः' 'वृद्धिः' इत्युक्ते कस्य तत् इत्याकाङ्क्षायाम् 'इकः' इति स्थानी उपतिष्ठते। एतत्तु यत्र विशिष्य स्थानी न निर्द्दिष्टस्तत्रैव। तथा च "मिदेर्गुणः" इत्यत्र 'इकः' इति योजनया 'मिदेरिको गुणः' इति लभ्यते, तेन मेद्यति इत्यादि भवति॥ "सिचि वृद्धिः परस्मैपदेषु" इत्यत्र इको वृद्धिर्विज्ञायते। अचैषीत् अलावीत् इत्यादि च रूपं भवति॥ अनुक्ते गुणवृद्धिशब्दे तु नैतत्। 'त्यदादीनामः' इति इदम् शब्दस्य अकारो विधीयते। स च गुणः। किन्तु गुणशब्दोच्चारणाभावात् इकारस्य न

भवति यथा प्राप्तम् अलोऽन्त्यस्यैव भवति। एवम् "दिव औत्" इति वृद्धिसंज्ञक औकारो विधीयते। परं वृद्धिशब्दस्य साक्षादनुक्तः सः अलोऽन्त्यस्यैव भवति न तु इकारस्य ॥

३५। अचश्च ॥ १ । २ । २८ ॥

दी—। ह्रस्वदीर्घप्लुतशब्दैर्यत्र अच् विधीयते तत्र 'अचः' इति षष्ठ्यन्तं पदमुपतिष्ठते।

The word अचः in the षष्ठी has to be supplied where an अच् is enjoined by mentioning the word ह्रस्व, or दीर्घ, or प्लुत।

मित—। चकारोऽवधारणार्थः। "ऊकालोऽच्—" इत्यतः 'अच् ह्रस्वदीर्घप्लुतः' इत्यनुवर्त्तते। ह्रस्वदीर्घप्लुतः अच् अचश्च इत्यन्वयः। ह्रस्वः, दीर्घः, प्लुतः इत्येवं भाव्यमानः अच् अच एव भवति इत्यर्थः। एतदेवोच्यते "ह्रस्वो दीर्घः प्लुतः इति यत्र ब्रूयात् अच इत्येतत् तत्र उपस्थितं द्रष्टव्यम्" इति भाष्ये दीक्षितेन च ह्रस्वदीर्घेत्यादिना अनूद्यते ॥ 'अचः इति षष्ठी क्वचिद् विशेषणात् क्वापि वा विशेष्यात् द्रष्टव्या। तथा च "ह्रस्वो नपुंसके प्रातिपदिकस्य" इत्यत्र "प्रातिपदिकस्य ह्रस्वो भवति"। किम्भूतस्य प्रातिपदिकस्य? अचः अजन्तस्य प्रातिपदिकस्य इत्येकं विशेषणतया व्याख्यास्यते। तेन ग्रामणि कुलम् इति ह्रस्वो भवति, सुवाक् कुलम् इति न ह्रस्वः ॥ "शमामष्टानां दीर्घः" इत्यत्र "अचो दीर्घो भवति। किम्भूतस्य अचः? "शमादीनामचः" इति विशेष्यत्वेन व्याख्यानम्। तेन शाम्यति इत्यनन्त्यस्यापि अकारस्य दीर्घो भवति ॥ ह्रस्वादि यत्र न श्रुतं तत्र नायम्। "दिव उत्" इति ह्रस्व उकारो विधीयते स्वरूपेण न स्वसंज्ञया। तेन वकारस्य भवति न अचः ॥

३६। आद्यन्तौ टकितौ ॥ १। १ । ४६ ॥

दी—। टित्कितौ यस्य उक्तौ तस्य क्रमात् आद्यन्तावयवौ स्तः।

That which drops ट and that which drops क are added as a limb respectively before and after the one of which they are enjoined.

मित—। आदिश्च अन्तश्च आद्यन्तौ। ट इति अकार उच्चारणार्थः। ट् च क् च टकौ। तौ इतौ ययोस्तौ टकितौ टित्कितौ इत्यर्थः ॥ आद्यन्त

इति समुदायः अंशतष्टित् अंशतश्च कित् । आद्यंशे टित् अन्तांशे कित् इति शेषः । एवम् आद्यन्तसमुदायेन टकित् समुदायस्य अन्वयः सिद्धः । पश्चात् "यथासंख्यम्—" इति अवयवानां पृथगन्वयः ; टिता आदेः किता अन्तस्य इति । तेन टित् आदिर्भवति कित् अन्तः इत्यर्थः सम्पद्यते । कस्य आदिरन्तो वा ? यस्य उक्तौ तस्य। यस्य टित् विहितः तस्य स आदिर्भवति, यस्य कित् तस्य अन्तः इति भावः ॥ यस्य उक्तौ तस्य अवयवावेतौ न तु तस्य स्थाने । तेन आगमाविमौ "षष्ठी स्थाने योगा" इत्यस्यापवादः ॥ लुटि भू ता इति स्थिते "आर्धधातुकस्येट्—" इति 'ता' शब्दस्य इट् । टित्त्वात् आद्यवयवः, तेन भू इता इति जातम् ॥ णौ या णिच् इति स्थिते "—आतां पुङ् णौ" इति या शब्दस्य पुक् । कित्वात् अन्तावयवः, तेन याप् णिच् इति जातम् ॥ प्रत्ययस्तु टिद्वा किद्वा पर एव भवति ॥ तथा च "चरेष्टः" इति चर् ट इत्येव न तु टचर् इति ।

## ३७ । मिदचोऽन्त्यात् परः ॥

**दी—। अचः इति निर्धारणे षष्ठी । अचां मध्ये योऽन्त्यः तस्मात् परस्तस्यैव अन्तावयवो मित् स्यात् ।**

That which drops म् comes in after the last of the vowels in the word of which it is enjoined and is to be deemed as a part of that vowel.

मित—। आद्यन्तौ इत्यतः अन्तशब्दमात्रम् अनुवर्त्तते । "मित् अचः अन्त्यात् परः अन्तः" इत्यन्वयः । तत्र 'अचः' इति षष्ठी, न पञ्चमी । पञ्चमीपक्षे 'अन्त्यात्' इति 'अचः' इत्यस्य विशेषणं भवति । ततश्च हलन्तेषु मित् न प्रवर्त्तते पयांसि, महान्ति इत्यादि च न सिध्यति ॥ 'अचः' इत्यस्य अचाम् इत्यर्थः । जातावेकवचनम् षष्ठी च निर्द्धारणे । तदाह 'अचां मध्ये यः अन्त्यः' इति ॥ तस्मात् परः तस्मादचः पर इत्यर्थः ॥ 'तस्यैव' तस्य अच एव 'अन्तावयवः । एतत् भाष्योक्तस्य 'पूर्वान्त' शब्दस्य व्याख्यानं । मित् पूर्वान्तः । कस्य पूर्वः ? यतः परो मित् । तदिह द्वौ पक्षौ—अचः परो मित् इति अच एव अन्तावयवः सः, अजन्तात् सङ्घातात् परो मित् इति तस्यैव सङ्घातस्य अन्तावयवः सः इति । आद्यो दीक्षितस्य, द्वितीयो

हरदत्तस्य। फले नास्ति भेदः। परम् अचो वर्णमात्रस्य अवयवकल्पना सङ्कटा प्रतिभाति ॥

३८। षष्ठी स्थानेयोगा ॥ १।१।४९ ॥

दी—। अनिर्द्धारितसम्बन्धविशेषा षष्ठी स्थानेयोगा बोध्या। स्थानञ्च प्रसङ्गः।

In this science the sixth case-ending attached to a word indicates that the word is to make room for another unless some other relation is specifically mentioned as implied by the case-ending. स्थान in the rule means प्रसङ्ग domain, subject-matter etc. Thus in the rule "अस्तेर्भूः" the षष्ठी in अस्तेः implies that अस् makes room for भू, *i.e.*, भू is substituted for अस्।

मित—। बहवो हि षष्ठ्यर्थाः। षष्ठीयुक्तेन क्वचित् स्वामी लक्ष्यते यथा राज्ञः पुरुषः, क्वचित् अवयवी यथा वृक्षस्य शाखा, इत्यादि। एवं पुरुषस्य भाग्यम्, द्रव्यस्य मूल्यम्, वित्तस्य मात्रा इत्यादिष्वपि भिन्नेष्वर्थेषु षष्ठ्या योगः। तदिह व्याकरणे नियमः क्रियते षष्ठ्या योगः स्थाने अर्थे एव भवति नान्यस्मिन्। स्थाने स्थानार्थे स्थानप्रतिपत्त्यर्थमित्यर्थः योगो यस्याः सा स्थानेयोगा, यया युक्तया आदेशस्य स्थानं विज्ञायते सा इति शेषः। इहैव निपातनात् सप्तम्या अलुक् ॥ तथा च "अस्तेर्भूः" इत्यत्र 'भूः' इत्यादेशः। कस्य स्थाने इति 'अस्तेः' इति षष्ठ्या विज्ञायते। अस्तेः स्थाने भूः स्यादित्यर्थः। युगपदुभयोरेकस्थानाधिकारस्य असम्भवात् आदेशात् परम् 'अस्' इति निवर्त्तते, 'भू' इत्येव केवलमुपलभ्यते ॥ इह 'स्थाने' इति सप्तम्यन्तस्य अनुकरणमिति न। अनुकरणे तु 'स्थाने' इति प्रातिपदिकं क्लीवे। तदा निपातनात् सप्तम्या अलुक् इति भाष्यवाक्यमसङ्गतं स्यात्। किञ्च स्थानेन योगो यस्या इति भाष्योक्तं व्याख्यानान्तरमपि न संगच्छेत ॥ नैतत् सार्वत्रिकम्। विशिष्य अन्यार्थनिर्देशे तु स्थानार्थो न भवति। तथा च "ऊदुपधाया गोहः" इत्यत्र उपधाया इत्युक्तेः गोह इत्यवयवषष्ठी न स्थानषष्ठी। गोहः अवयवभूतस्य उपधाया ओकारस्य ऊत् इत्यर्थः सम्पद्यते, न गोहः स्थाने ऊदिति। तदाह अनिर्द्धारितसम्बन्धविशेषा षष्ठी इति अनिर्द्धारितः सम्बन्धविशेषो यया इति विग्रहः ॥ स्थाने योगा इति पदद्वयमसमस-

मित्यपि पचान्तरं भाष्ये दृश्यते। तत्र स्थाने अयोगा इति छेदः। अयोगा अनुक्तसम्बन्धा षष्ठी स्थाने भवति इत्यर्थः। इदमेव सुगमं व्याख्यानम्॥ उदाहरणे अस्तेः इति स्थानषष्ठी। यथा अवयवषष्ठ्या अवयवी लक्ष्यते तथा स्थानषष्ठ्या स्थानी। स्थानी प्रसङ्गी इति दीक्षितः तेन अस् इति प्रसङ्गी 'अस्' इत्यस्य प्रसङ्गः प्राप्त इत्यर्थः। यथा वृक्षस्य शाखा इत्यत्र वृक्षः अवयवी शाखा अवयव इति बोधः तथा अस्तेः भूः इति अस्तिः प्रसङ्गी भूः प्रसक्तः इति लभ्यते॥ स्थानमायतनमिति कृत्वा स्थानी अप्रयुज्यमान इत्यपि शक्यते वक्तुम्, यथा—"स्थानिन्यपि मध्यमः" "कर्मणि स्थानिनः" इत्यादिषु। अस्तिः अप्रयुक्तः भू इति प्रयुक्तः इति पूर्वोक्त एवार्थः॥

**३८। स्थानेऽन्तरतमः॥ १।१।५०॥**

**दी—। प्रसङ्गे सति सदृशतम आदेशः स्यात्। यत्र अनेकविधमान्तर्य्यं तत्र स्थानत आन्तर्य्यं बलीयः।**

When there is occasion for substitution the substitute should be the most similar to what it replaces. If more than one point of similarity exists, similarity in the region of pronunciation determines the substitute. Thus in दण्ड अग्र we have अ अ together and have to substitute दीर्घ for the two by the rule "अकः सवर्णे दीर्घः"। Now दीर्घ presents आ ई etc. Of these आ is the most similar to अ अ because both आ and अ अ are कण्ठ्य Hence the form दण्डाग्र। Again in चि तुमुन् the rule "सार्वधातुकार्द्धधातुकयोः" directs गुण in place of the इ in चि। Now गुण includes अ, ए, ओ। Of these ओ has nothing in common with इ। ए is similar in स्थान having तालु as a common place of origin. अ also is similar because both are short. Similarity in origin (स्थान) gets the preference and ए is substituted; the result is चेतुम्। Similarly स्तु तुमुन् gives स्तोतुम्।

मित—। पूर्वसूत्रात् 'स्थाने' इत्यनुवर्त्तते। तेन सह 'स्थाने स्थाने अन्तरतमः' इति मिलितोऽन्वयः। तत्र अनुवृत्तस्य आद्यस्य 'प्रसङ्गे' इत्यर्थः। भावे सप्तमी। द्वितीयस्तु उच्चारणस्थानवाची। विषयसप्तमी। अन्तरशब्दः सदृशपर्य्यायः। तस्य-

अर्थः—'स्थाने' प्रसङ्गे सति 'स्थाने' उच्चारणस्थानविषये 'अन्तरतमः' सदृशतमः आदेशः स्यात्। सादृश्यात् प्रसङ्गः। सदृशेषु अनेकेषु प्राप्तेषु ये स्थानेन सदृशाः तेषामेव उपयोगी नान्येषाम्। तेषु पुनर्यस्य अधिकतमं सादृश्यं स एव आदेशः॥ 'प्रसङ्गे सति' इत्यत्र ये ये सदृशाः सर्वे एव ते प्रसक्ता द्रष्टव्याः॥ सादृश्यञ्च चतुर्विधम् —ताल्वादिस्थानसाम्यात्, नादघोषादिगुणसाम्यात्, ह्रस्वत्वदीर्घत्वादि-कालसाम्यात्, अर्थसाम्याच्च। तदाह 'अनेकविधमान्तर्य्यम्' इति॥ 'स्थानतः' स्थानेन इत्यर्थः॥ 'बलीयः' इति स्थाने शब्दस्य अनुवृत्त्या लभ्यते इति दर्शितं प्राक्॥ इह 'चेतुम्' इति चिधातोरिकारस्य गुणेन अकार एकार ओकारश्च प्राप्तः। तत्र सादृश्याभावात् ओकारस्य प्रसङ्गो नास्ति। अकारो ह्रस्वमात्रया एकारस्तु तालुस्थानसाम्यात् इकारेण सदृशः। स्थानसाम्यं बलवत्तरमिति एकारे कृते चेतुम्॥ वाचा हरिः इति विग्रहे वाग् हरि इति जाते हकारस्य पूर्वसवर्णे क, ख, ग, घ, ङ इति प्राप्ताः। सवर्णा इति सर्वे एव स्थानेन सदृशा हकारस्य। परमेषु ककार खकारौ अघोषौ इतरे घोषवन्त इति ते घोषवतो हकारस्य सदृशतराः। किञ्च गकारादिषु गकार-ङकारौ अल्पप्राणौ घकारो महाप्राण इति महाप्राणस्य हकारस्य सदृशतमो घकार एव आदेशः। तेन जातं वाग्घरिः इति॥

## ४०। तस्मिन्निति निर्दिष्टे पूर्वस्य॥ १।१।६६॥

**दी—। सप्तमी निर्देशेन विधीयमानं कार्य्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य बोध्यम्।**

An injunction, laid down with some word having the seventh case-affix, operates on what *immediately* precedes the word. The rule "इकोयणचि" enjoins यण् of इक्। Of which इक्? The condition अचि in the सप्तमी supplies the answer with the help of this present rule. The operation is to be on the इक् that immediately precedes अच्। Thus दधिमिश्रमन्नम् gives the compound दधि अन्न where इक् *i.e.* इ immediately precedes अ which is an अच्। Hence इ is replaced by यण्, *i.e.*, by य which is the अन्तरतम of इ and the form दध्यन्न is obtained.

मित—। तस्मिन्शब्द इह अर्थपरः। एतच्च इति शब्दयोगात् "न वेति विभाषा" इत्यत्र यथा। 'तस्मिन्निति' तच्छब्दस्य य इह प्रकारस्तेन प्रकारेण इत्यर्थः, सप्तम्यन्तेन इति शेषः। तच्छब्देन च सर्वनाम्ना कृत्स्नस्य शब्दजातस्य ग्रहणम्॥ इह निर् इत्युपसर्गो नैरन्तर्ये वर्त्तते दिशधातुश्च उच्चारणार्थः। निर्दिष्टं नैरन्तर्येण उच्चारितम्॥ सप्तम्या यो निर्देशः तेन 'सप्तमीनिर्देशेन' सप्तम्यन्तशब्दोच्चारणेन 'विधीयमानं कार्य्यम्' क्रियमाणो विधिः सप्तम्या निर्दिष्टात् पूर्वस्य 'वर्णान्तरेण अव्यवहितस्य पूर्वस्य' इत्यर्थः 'बोध्यः' वेदितव्य॥ इह "तस्मिन्निति पूर्वस्य" इत्येतावतैव सप्तम्यन्तात् पूर्वस्य विधिर्लभ्यते। तथापि यत् 'निर्दिष्ट' शब्दो गृह्यते तेन ज्ञाप्यते नायं पूर्वमात्रस्य विधिः किन्तु अव्यवहितस्य पूर्वस्य। अतएव निर्दिष्टं नैरन्तर्येण उच्चारितमित्युक्तम्॥ अथवा एतदर्थमित्थं व्याख्यायताम्—'तस्मिन्निति' सप्तम्यन्तं कञ्चित् शब्दमुच्चार्य्य इत्यर्थः यत् विधीयते तत् 'निर्दिष्टे पूर्वस्य' सप्तमीनिर्दिष्ट-शब्दापेक्षया यत् पूर्वं तस्य भवति। एवं सति "इकोयणचि" इत्यत्र अचि निमित्ते इकः स्थाने यो यण् विधीयते स अचः अव्यवहितस्य पूर्वस्य भवति। तेन प्रत्याहारः, खादन्नम् इत्यादि सिध्यति॥ पूर्वमात्रे प्राप्ते विधौ अव्यवहितपूर्वे नियम्यते॥ अधिकमग्रे॥

## ४१। तस्मादित्युत्तरस्य॥ १।१।६७॥

**दी—। पञ्चमीनिर्देशेन क्रियमाणं कार्य्यं वर्णान्तरेण अव्यवहितस्य परस्य ज्ञेयम्।**

An operation, directed with some word in the fifth case-ending, affects what immediately follows the word. The rule "ईदासः" directs ई of आन when it follows the root आस। Of which आन? The condition आसः in the पञ्चमी restricts it to the आन that comes *immediately* after आस। Thus आसीन, but no ई in आस्ते भजमानः, because the आन here is not *immediately* after आस।

मित—। निर्दिष्टे इत्यनुवर्त्तते। प्राग्वत् तस्मादित्यर्थपरम्, निर्दिष्टग्रहणेन च अव्यवहितता। 'निर्दिष्टे उत्तरस्य' निर्दिष्टापेक्षया उत्तरस्य इत्यर्थः। नागेशस्तु

विभक्तिविपरिणामेन निर्दिष्टात्' शब्दस्य अन्वयमाह। उत्तरमात्रस्य प्राप्ते अव्यवहितोत्तरवर्त्तिनि कार्य्यं नियम्यते। तथा च "सर्वप्रविभ्यः स्थः" इति अव्यवहितस्य स्था धातोः सन्तिष्ठते इति भवति। व्यवहितस्य तु "कमिह समुपस्थास्यति विधिः" इति परस्मैपदमेव॥ कार्य्यम्, कार्य्यस्य विषयः यः कार्य्यी इत्युच्यते, कार्य्यस्य निमित्तम् इति त्रितयसन्निधाने एव सूत्रयोरनयोः प्रवृत्तिः। तत्र निमित्ते सप्तमीनिर्दिष्टे अव्यवहितं पूर्वं कार्य्यस्य विषयः, पञ्चमी निर्देशे तु अव्यवहितं परम्। एवम् "कर्मणि द्वितीया" "दूरान्तिकार्थेभ्यो द्वितीया च" इत्यादिषु 'कर्मणि परभूते पूर्वस्य द्वितीया' 'दूरादिषु पूर्वभूतेषु परस्य द्वितीया च' इत्यादिकं न। तादृशे व्याख्याने 'कर्मणि' इत्यादिकं निमित्तं भवति, 'द्वितीया' इत्यादिकं कार्य्यम्, परं कार्य्यस्य विषयो न लभ्यते॥ न च वाच्यं 'पूर्वम्' 'उत्तरम्' इत्येव विषयः। एताभ्यां हि विशिष्यते विषयः, नैते स्वयं विषयः। स हि साक्षान्निर्दिश्यते "इको यणचि" इत्यादिषु प्रकरणाद्वा लभ्यते "ईदासः" इत्यादिषु॥

## ४२। अलोऽन्त्यस्य॥ १।१।५२॥

दी—। षष्ठीनिर्दिष्टस्य अन्त्यस्य अल आदेशः स्यात्।

The substitute of what is in the sixth case-ending comes in place of the last letter only. Thus "ढः पः—" substitutes प for the final ह only not for the whole of कह।

मित—। "स्थानेऽन्तरतमः" इत्यतः 'स्थाने' इत्यनुवर्त्तते। "स्थाने अलः अन्त्यस्य" इति पूर्णं सूत्रशरीरम्। स्थाने यो भवति सः अन्त्यस्य अलः स्थाने वेदितव्यः इत्यर्थः। कः स्थाने भवति? आदेशः। किं तस्य लिङ्गम्? "षष्ठी स्थानेयोगा" इत्यनेन षष्ठीनिर्देशः। तदाह 'षष्ठीनिर्दिष्टस्य' इत्यादि। यत् षष्ठ्या निर्दिष्टं तस्य यः अन्त्यः अल् तस्य स्थाने आदेशः स्यात्। तथा च "हनस्तः—" इति वध्नि अन्त्यस्य नकारस्यैव तकारो भवति न सर्वस्य हन्शब्दस्य—घातः॥ आदेशः अल एव पदस्य माभूत्। अन्त्यस्यैव अनन्त्यस्य मा भूत् इति द्विविधोऽत्र नियम इति नागेशः॥ 'स्थाने' इत्यनुवृत्तेः आदेशे एवायं नियमः। आगमेषु तु अन्त्यस्यैव इति न। तेन "आर्द्धधातुकस्य—" इति य इट् स तृच्प्रत्ययस्य चकारस्य अन्त्यस्य न भवति।

यदि स्यात् "आद्यन्तौ टकितौ" (३६) इति चकारात् पूर्वम् लृशब्दस्य ऋकारात् परं स्यात् ॥ केचिदिह 'षष्ठी' इत्यप्यनुवर्त्तयन्ति, फले तु भेदो नास्ति ॥

४३ । ङिच्च ॥ १।१।५३ ॥

दी—। अयमप्यन्त्यस्यैव स्यात् । "—सर्वस्य" (४५) इत्यस्यापवादः ।

This too, *i.e*, a substitute that drops ङ्, is in place of the last letter. This bars the सर्वादेश directed by the rule "अनेकाल्—"। Thus in गो अग्रम् the substitute अवङ् comes in for the final only giving गवाग्रम् by the rule "अवङ् स्फोटायनस्य"।

मित—। ङ् इत् यस्य स ङित् । 'स्थाने' इत्यस्ति 'अलोऽन्त्यस्य' इति च । ङिदपि स्थाने भवन् अलोऽन्त्यस्यैव भवति ॥ तथा च "अनङ् सौ" इति सखिशब्दस्य इकारस्य अन्त्यस्यैव अनङ् भवति ॥ अनेकाल् अयमनङ्, तेन "अनेकाल—" इति सर्वादेशः प्राप्तः प्रतिषिध्यते । तदाह "सर्वस्य" इत्यस्यापवाद इति ॥

४४ । आदेः परस्य ॥ १।१।५४ ॥

दी—। परस्य यद्विहितं तत्तस्य आदेर्बोध्यम् । "अलोऽन्त्यस्य" इत्यस्यापवादः ।

What is enjoined of the immediately following word takes place of the first letter of that word. Thus "द्व्यन्तरुप—" directs ई to replace अप when coming after द्वि, but the ई replaces the first letter only of अप giving द्वीप ।

मित—। 'स्थाने' इत्यस्ति 'अलः' इति च । परस्य आदेः अलः स्थाने इत्यन्वयः । 'परस्य यद्विहितम्' पञ्चमी निर्देशेन इति शेषः ॥ "ईदासः" इति आनस्य परभूतस्य ईकारो विधीयते । स च तस्य आदेर्वर्णस्य आकारस्य भवति न समुदायस्य ।

४५। अनेकाल्शित् सर्वस्य ॥ १।१।५५ ॥

दी—। स्पष्टम्। "अलोऽन्त्य"—सूत्रापवादः। "अष्टाभ्य औश्" इत्यादौ "आदेः परस्य" इत्येतदपि परत्वादनेन बाध्यते।

An आदेश, containing more than one letter, also one that drops श, replaces the whole word. This bars the rule "अलोऽन्त्यस्य।" Thus the rule "अस्तेर्भूः" directs भू in place of अस्। Now the आदेश here, viz., भू, contains more than one letter; hence it replaces the whole of अस् and not the final स only. It also bars "आदेः परस्य" when there is conflict of the two because it comes later. Hence "अष्टाभ्य औश्" directs औश् for जस् and शस् coming after अष्टन्। This affecting what follows, the rule "आदेः परस्य" comes in; the आदेश, *i.e.* औश् again drops श् and is शित्, so the present rule also applies. Thus there is conflict. The present rule, however, prevails and we get औश् in place of the whole of जस् and शस्।

मित—। 'स्थाने' इत्यस्ति। अनेके अलः अस्मिन् अनेकाल्। श् इत् अस्य शित्। अनेकाल् च शिच्च इति समाहारः॥ अनेकाल्शित् आदेशः सर्वस्य स्थाने भवति इति सूत्रार्थः॥ तथा च "एतदोऽन्" (१९५१—५।३।५) इति अन् अनेकाल् सर्वस्य एतदः स्थाने भवति न "अलोऽन्त्यस्य" इति दकारमात्रस्य। तेन एतद् तसि इति स्थिते अनतः इति जाते "नलोपः—" (२३६) इति नलोपे अतः॥ "इदम इश्" इत्यत्र इश् इति शित्। अतः सर्वस्य आदेशः। तेन इदम् तसि इति स्थिते इश् तसि इति जाते इतः। "नानुबन्धकृतमनेकाल्त्वम्" इत्युक्तेः इश् एकाल् न अनेकाल्॥ "अतो भिस ऐस्" इति अनेकाल् ऐस् सर्वस्य भिसः स्थाने भवति न "आदेः परस्य" इति भमात्रस्य। "अष्टाभ्य औश्" इत्यत्र औशः शित्त्वात् सर्वादेशः प्राप्तः, अष्टाभ्य इति पञ्चमी निर्देशात् पुनः "आदेः परस्य" इति। एवं युगपदुभयप्राप्तौ यः परः स प्रवर्त्तते यः पूर्वः स बाध्यते इति सर्वादेश औश्।

४६। स्वरितेनाधिकारः॥ १।३।११ ॥

दी—। स्वरितत्वयुक्तं शब्दस्वरूपम् अधिकृतं वेदितव्यम्।

What is pronounced in the स्वरित pitch is to be supposed as अधिकृत, *i.e.*, allowed jurisdiction over what follows.

मित—। स्वरितः स्वरभेदः। तेन लिङ्गेन अधिकारी वेदितव्य इत्यर्थः। 'यः शब्दः सूत्रकारेण स्वरितेनोच्चारितः स उत्तरत्र अधिकृतो बोध्यः तत्र स अन्वेति इति शेषः ॥

दी—। परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः।

Of the subsequent, the persistent, the internal and the special, the later in the order above has precedence over the earlier. In other words the नित्य sets aside what is पर; the अन्तरङ्ग prevails over both नित्य and पर; while अपवाद bars नित्य, पर and अन्तरङ्ग। पर, नित्य etc. are relative terms. What is पर etc. with respect to one may not be so with reference to another. Of two operations if one is such that it can take place either before or after the other has worked that one is नित्य with respect to the other. Thus in तुद् तिप् the rule "सार्वधातुकार्द्धधातुकयोः" (२१६८—७।३।८४) requires तु to become तो by गुण also the rule "तुदादिभ्यः शः" (२५३४—३।१।३३) demands श to come in between तुद् and तिप् stopping the गुण। Also गुण is a subsequent कार्य्य compared to श। As is expected from the rule "विप्रतिषेधे परम्" the गुण, ought to prevail giving तोद् तिप् and then with श between, तोदति is to be the form. But we observe that श can come in irrespective of गुण, hence compared to गुण the श is a नित्यकार्य्य। This therefore has precedence over गुण though that is guided by a subsequent rule. Hence the correct procedure is तुद् श तिप् yeilding तुदति। अन्तरङ्ग is internal. Such a कार्य्य does not depend upon external causes. Thus ग्रामणी in the sense "leader of the village" becomes neuter when qualifying कुल house. If we say "by the leading house in the village" we have to attach टा to ग्रामणी in the neuter. But टा requires नुम् by the rule "इकोऽचि विभक्तौ" (३२०—७।१।७३)। The प्रातिपदिक then becomes ग्रामणीन्। Neuter

however requires shortening of the ई by "ह्रस्वो नपुंसके प्रातिपदिकस्य" (३१८—१।२।४७) making ग्रामणिन् as the प्रातिपदिक। The results being different the question is which to prefer? We note that the rule for नुम् is later than that for ह्रस्व which is a ground for preparing नुम्। Moreover नुम् comes in irrespective of ह्रस्व while the ह्रस्व is barred if नुम् is allowed first. Hence compared to ह्रस्व the नुम् is नित्य which is another ground for preference of नुम्। On the other hand the ह्रस्व is an internal affair—अन्तरङ्ग—being independent of what विभक्ति is attached. Hence ह्रस्व prevails over नुम। The correct form then is ग्रामणिना। Instance of an अपवाद prevailing over an अन्तरङ्ग is seen in दैत्य अरि। "आद्गुणः" is here an अन्तरङ्गविधि। This should give दैत्यरि। "अकः सवर्णे दीर्घः" however prevails because it is an अपवाद of "आद्गुणः" and gives दैत्यारि।

मित—। परादयः सम्बन्धिशब्दाः॥ पाणिनीयविन्यासे द्वयोः सूत्रयोः यत् परवर्त्ति तत् परम् इतरत् पूर्वम्॥ विधिद्वयस्य प्रथमे प्रवृत्ते यदि द्वितीयो न प्रवर्त्तते, प्रथमस्य प्रवृत्तेऽपि अप्रवृत्तेऽपि द्वितीये प्रवर्त्तते एव, तदा प्रथमो नित्यः अन्यः अनित्यः॥ अन्तरङ्गता वहिरङ्गता च लक्ष्यानुसारतो भवति। अन्तर्मध्ये लक्ष्यभूतवर्णसङ्घातस्य मध्ये अङ्गानि निमित्तानि विधिप्रवृत्त्युपकरणानि विधिभाक् विधिहेतुश्च इति यावत्, यस्य विधिः स अन्तरङ्गो विधिः॥ अपोद्यते प्रत्यादिश्यते विषयान्निवर्त्त्यते अनेन इत्यपवादो विषयसङ्कोचः तदर्थको विधिरितिशेषः॥ परश्च नित्यश्च अन्तरङ्गश्च अपवादश्च इति द्वन्द्वः। तेषामिति निर्द्धारणे षष्ठी॥ उत्तरं परं परवर्त्ति। उत्तरस्मादुत्तरम् उत्तरोत्तरम्। सुप् सुपा॥ आनुपूर्व्ये द्विर्वचनन्तु न। तथा सति उत्तरमुत्तरमिति स्यात् सुपो लुक् न स्यात्। "कर्मधारयवदुत्तरेषु" (८।१।११) इति हि सौत्रस्यैव द्विर्वचनस्य वार्त्तिकेषु न प्रवर्त्तते। तथा च आनुपूर्व्ये भाष्योक्तमुदाहरणद्वयम् "मूले मूले स्थूलाः। अग्रे अग्रे सूक्ष्माः" इति॥ अतिशयेन बलवत् बलीयो बलवत्तरम्। ईयसुनि मतुब्लोपः॥ परनित्यान्तरङ्गापवादानां मध्ये यदुत्तरं तत् पूर्वापेक्षया बलवत्। ततोऽपि यदुत्तरं तद्बलवत्तरमित्यर्थः॥ इह शब्देन्दुशेखरे "अन्तर्मध्ये बहिरङ्गशास्त्रीय-निमित्तसमुदायमध्ये अन्तर्भूतानि अङ्गानि निमित्तानि यस्य तदन्तरङ्गम्। तदीय-

निमित्तसमुदायानन्तर्भूताङ्गकं बहिरङ्गम्" इति दृश्यते। नूनं प्रक्षिप्तमेतत्। बहिरङ्गमाश्रित्य अन्तरङ्गव्याख्यानं न समीचीनम्। विज्ञातेनैव अविज्ञातं व्याख्यायते। बहिरङ्गं चेत् ज्ञातम् अन्तरङ्गमपि ज्ञायत एव किमियता व्याख्यानेन? अन्ते पुनः "तदीयनिमित्तसमुदायानन्तर्भूताङ्गकम्" इत्यन्तरङ्गाश्रयं बहिरङ्गनिरूपणम् अन्योऽन्याश्रयदूषितम्॥ "विप्रतिषेधे—" (१।४।२) इति यत् परं तत् बलवत्। नित्यस्तु परस्मात् बलवत्तरम्। तथा च एध वृद्धौ + झ इति स्थिते "आत्मनेपदेषु—" (७।१।५) इति झस्य 'अत्' प्राप्नोति "कर्त्तरि शप्" (३।१।६८) इति एधतेः शप् च। प्रथमम् अद्भावे पश्चात् शपि एधते इति भवति। प्राक् शपि तु अकारान्तत्वात् 'अत्' नास्ति शप् पुनः कृतेऽपि अकृतेऽपि अद्भावे प्राप्नोति। एवं नित्यः शप् अनित्य अद्भावः। नित्यत्वात् परस्मादपि अद्भावात् बलीयान् शप् प्राक् प्रवर्त्तते 'एधन्ते' इति च रूपम्॥ नित्यादप्यन्तरङ्गं बलवत्। देवितुमिच्छति इति दिव् सन् तिप् इति स्थिते "सनीवन्त—" (२६१८—७।२।४९) इति वैकल्पिक इडभावः। ततः "इको झल्" (२६१२—१।२।९) इति सनः कित्वे च्छ्वोः शूडनुनासिके च" (२५६१—६।४।१९) इति वकारस्य ऊठ्। दि ऊ सन् तिप् इति जाते सन्निमित्तं 'दि दि ऊ' इति द्विर्वचनं प्राप्तं सन्निरपेक्षं 'द्यू' इति अन्तरङ्गो यणादेशश्च। तत्र द्विर्वचने प्रथमं कृते दिद्यूष इति प्राप्नोति, अन्तरङ्गात् परं द्विर्वचने तु हलादिशेषे दुद्यूष' इति। आद्ये अभ्यासांशे यणादेशो न भवति। एवं कृतेऽपि अकृतेऽपि यणादेशे द्विर्वचनं कृते तु द्विर्वचने अंशतो यणादेशाभावः। तदिह नित्यं द्विर्वचनम्। अन्तरङ्गात् दुर्बलमिति प्रथममन्तरङ्गो यणादेशो भवति दुद्यूषति इति च लटि रूपम्॥ अपवादस्तु वचनादेव बलवान् अन्तरङ्गादपि, अन्यथा अनर्थकः प्रत्यादेशः स्यात्। तथा च "यञञोश्च" (२।४।६४) इति गोत्रप्रत्ययस्य लुगुक्तः। तेन गर्गस्य गोत्रापत्यानि पुमांस इति 'गर्ग यञ्' इति स्थिते यञ् लुकि गर्गाः। यदा तु गर्गस्य गोत्रापत्यानि ये पुमांसस्तेषां छात्रा इति विवक्ष्यते तदा 'गर्ग यञ् छ' इति प्राप्तः। तत्र 'गर्ग यञ्' इति समुदायस्तद्धितस्य विषयः। तस्मिंश्च समुदाये छ प्रत्ययनिरपेक्षं यत् किञ्चित् कार्यं तदन्तरङ्गम्। तेन इह अन्तरङ्गो यञ् लुक्। तस्य च "गोत्रेऽलुगचि" (४।१।८९) इत्यपवादः। अपवादस्य बलवत्तरत्वात् अन्तरङ्गमपि लुकं बाधित्वा छ-प्रत्यये गार्गीया इति भवति॥ तत्त्वबोधिन्यां तु 'दैत्यारिः श्रीशः' इति अन्तरङ्गादपवादस्य बलवत्तरत्वं प्रदर्शितम्।

उक्तञ्च "अन्तरङ्गत्वात् गुणे यणि च प्राप्ते अपवादत्वात् सवर्णदीर्घः"। अयमाशयः— दैत्यानामरिः, श्रियः ईशः, इति विग्रहे समासे सुब्लुकि 'दैत्य अरि' 'श्रीईश' इति स्थिते एकत्र "आद्गुणः" इति गुणः प्राप्तः, अन्यत्र "इको यण्—" इति यणादेशः। द्वावप्यन्तरङ्गौ तथापि "अकः सवर्णे दीर्घः" इति सवर्णदीर्घत्वेन बाध्येते—इति। अत्र वक्तव्यं गुणादेशो यणादेशश्च यद्यन्तरङ्गः सवर्णदीर्घोऽपि तथैव। इह 'दैत्य अरि' 'श्री ईश' इत्यादि प्रातिपदिकं लक्ष्यम्। लक्ष्ये च आदेशस्य अङ्गानि। तत् गुणो वा यण् वा दीर्घो वा अन्तरङ्ग एव स आदेशः। एवं त्रिष्वपि तुल्या अन्तरङ्गता कथमेकस्य प्रवर्त्तिका इतरयोश्च बाधिका स्यात्? वस्तुतस्तु पूर्वं बाधित्वा बलवत्तरं परं प्रवर्त्तते उत्सर्गं वा अपास्य अपवादः इत्येवेह वक्तुं न्याय्यं प्रतिभाति ॥

दी—। "असिद्धं बहिरङ्गमन्तरङ्गे" ( परिभाषा )।

A वहिरङ्ग operation is not recognised in making अन्तरङ्ग changes. Thus in पचाव इदम्—we two will cook this—गुण gives पचावेदम्। Now in पचावे here, ए is, by the rule "अन्तादिवच्च" (6. 1. 85.) deemed as final of पचाव। But the final of पचाव is a लोट् affix. Hence the ए is a लोट् affix and has to be changed into ऐ by the rule "एत ऐ" ( 2253—3. 4. 93. ) This is undesirable and is avoided by the present परिभाषा। The गुण here is a वहिरङ्ग operation and the change into ऐ is अन्तरङ्ग। Hence the rule "एत ऐ" does not recognise the ए, consequently does not operate.

मित—। अन्तरङ्गे विधौ कर्त्तव्ये वहिरङ्गं शास्त्रमसिद्धं कृतमपि अकृतमिव वेदितव्यमित्यर्थः। तथा च ग्रामणि कुलम् इत्यत्र नयतेः परं क्विप्। नयते र्णीकारस्य "ह्रस्वो नपुंसके,—" इति ह्रस्वो जातः। "ह्रस्वस्य पिति कृति तुक्" ग्रामणित् कुलम् इति तुक् प्राप्तः, अनया तु परिभाषया निवार्य्यते। लक्ष्यदृष्ट्या अन्तरङ्गता वहिरङ्गता च इत्युक्तं प्राक्। 'ग्रामणी' इति क्विपि कृते पश्चात् नपुंसके प्रयोगः तदुत्तरञ्च नपुंसकह्रस्वः। तेन क्विपं प्रति वहिरङ्गो ह्रस्वः॥ स च अनया परिभाषया क्विबुत्पत्त्यवस्थायाम् असिद्धः। अतो न तुक्॥ यत्तु प्राक् 'ग्रामणिना

कुलेन' इत्यत्र क्रस्य अन्तरङ्गत्वमुक्तं लक्ष्यभेदात् किल तत्। एकत्र ग्राम नी क्विप् इति लक्ष्यम्, अत्यत्र ग्रामणी टा इति ॥

दी—। "अकृतव्यूहाः पाणिनीयाः" (परिभाषा)। निमित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्य्यं न कुर्वन्ति इत्यर्थः।

Tho followers of Panini do not undertake futile opertions. The sense is that if they see that the cause for a change is about to disappear they do not make the change at all.

मित—। ऊह्यते कर्त्तव्यत्वेन निरूप्यते इत्यूहः प्रक्रियाविशेषः। विफलः ऊहः व्यूहः आसन्ननिमित्तलोपा प्रक्रिया। अकृतः अननुष्ठितो व्यूहो येस्ताद्दशा अकृतव्यूहाः। पाणिनीयाः पाणिनिशिष्याः अकृतव्यूहा भवन्ति। तदेव कथ्यते निमित्तमित्यादिना ॥

## अथाच्-सन्धिप्रकरणम्

४७। इको यणचि ॥ ६।१।७७ ॥

दी—। 'इकः' स्थाने 'यण्' स्यात् 'अचि' संहितायां विषये। 'सुधी उपास्यः' इति स्थिते स्थानत आन्तर्य्यात् ईकारस्य यकारः। 'सुध्य् उपास्यः (?) इति जाते—

In the matter of संहिता—Contiguity—यण् should replace इक् when अच् follows immediately after it. Thus Starting with सुधी उपास्य:—adored by the wise—we find that the ई of सुधी is an इक् and it is immediately followed by उ which is an अच्। Hence ई has to be changed into यण्। But यण् stands for य, व, र, ल। Of these the most similar अन्तरतम—to ई is य considering the place of origin. Substituting य we get सुध्य् उपास्य: and look forward.

मित—। 'अच् सन्धिः' स्वरसन्धिः। स्पष्टतादेतोः चकारस्य ककारादिकं पदान्तकार्य्यं न कृतम् ॥ 'उपास्यः' इति विसर्गो लिपिकरप्रमादज इवाभाति।

एतच्च उपरिष्टात् स्फुटीभविष्यति। इक इति स्थानषष्ठी। तदाह 'इकः स्थाने' इति। यण् इत्यादेशः। अचि इति अचि परे अव्यवहिते परे इत्यर्थः। एतेन इक् स्थानी यण् आदेशः अच् आदेशस्य निमित्तम् इत्यायाति। "संहितायाम्" ( ६।१।७२ ) इत्यधिकारसूत्रम् तदाह 'संहितायां विषये' इति॥ इह 'इक्' यण् 'अच्' इति प्रत्याहारः। इक् इति इ उ ऋ लृ, यण् इति य व र ल। "अणुदित्—" इत्यनेन इकार ईकारस्यापि ग्राहकः। तत् ईकारस्यायमादेशः। परं यादीनां चतुर्णां क आदेशः स्यादिति सन्देहः। निर्णयमाह 'स्थानत आन्तर्य्यात्' इत्यादि। 'स्थानत आन्तर्य्यं बलीयः ( ३९—१।१।५० ) इत्युक्तेः कण्ठ्यस्य ईकारस्य कण्ठ्यो यकार एव अन्तरतमः स एव आदेश इत्यर्थः॥ सुधीभिरुपास्य इति विग्रहे समासे सुब्लुकि यणादेशे ईकारस्य यकारे सुध्य् उपास्यः ( ? ) इति स्थिते प्रक्रियान्तरं प्राप्तम्। तत्र सूत्रमाह—

**४८। अनचि च॥ ८।४।४७॥**

**दी—। अचः परस्य यरो द्वे वा स्तः, न तु अचि। इति धकारस्य द्वित्वम्।**

A consonant other than ह is doubled if coming after a vowel, but not if a vowel follows. This gives सु ध् ध् य् उपास्यः ( ? )।

मित—। "अचो रहाभ्यां द्वे" इति पूर्वसूत्रात् 'अचः' इति पञ्चम्यन्तमनुवर्त्तते 'द्वे' इति च। "यरोऽनुनासिके—" ( ८।४।४५ ) इतः 'यरः' इति षष्ठ्यन्तं स्थानी 'वा' इति चानुवृत्तम्। ततः 'अचः यरः द्वे वा अनचि च' इति मिलितोऽन्वयः। तदाह 'अचः परस्य' इत्यादि॥ 'अनचि' इति प्रसज्यप्रतिषेधः, अचि न इत्यर्थः। चकार एवार्थे अवधारणे। 'अनचि च' अचि न एव इति भिन्नं वाक्यम्, तदाह 'न तु अचि' इति॥ इह सुशब्दस्य उकारात् परं धकारः ततः परश्च यकारो न अच् इति प्रवर्त्तते पाक्षिकं द्वित्वम्। तेन जातं सु ध् ध् य् उपास्यः ( ? ) इति॥ ननु आदेशः स्थानिवद्भवतिइति ईकारस्य स्थाने य इह यकारः सोऽपि अजेव, कथं तर्हि द्वित्वप्रवृत्तिः? तत्रोच्यते—

४९ । स्थानिवदादेशोऽनल्विधौ ॥ १।१।५६ ॥

दी—। आदेशः स्थानिवत् स्यात्, न तु स्थान्यलाश्रयविधौ । अनेन इह यकारस्य स्थानिवद्भावेन अच्त्वमाश्रित्य "अनचि च" (४८) इति द्वित्वनिषेधो न शङ्क्यः, "—अनल्विधौ" इति तन्निषेधात् ।

A Substitute is to be treated like the retiring word, but not in the matter of changes due to any letter in the retiring word. By this rule the य here must not be deemed as a vowel and the duplication of ध् barred owing to the prohibition "अनचि च" (48) because अनल्विधौ—but not in the matter &c.—withholds the स्थानिवद्भाव here.

मित—। स्थानमात्रं यस्यास्ति न स्वरूपं स स्थानी अपसारितः अपसार्य्यमाणो वा कश्चित् । स्थानिना तुल्यः स्थानिवत् । भवति इति क्रिया ऊह्या ॥ अल् इति प्रत्याहारो वर्णमात्रवाची । स्थानिसम्बन्धी अल् । विधिर्विधानम् । अलाश्रयो विधिरल्विधिः । न अल्विधिः अनल्विधिः तस्मिन् विषये । प्रसज्यप्रतिषेधो नञ् । तदाह 'न तु' इत्यादि ॥ इहापि प्राग्वत् भिन्ने वाक्ये । आदेशः स्थानिवत् इत्येकं वाक्यम्, अनल्विधौ इति द्वितीयम् । आद्येन आपाततो यकारस्येह स्थानिवत्ता प्राप्ता ततो द्वित्वनिषेधशङ्का । परमयं निषेधः स्थानिन ईकारस्य अच्त्वमाश्रित्य प्रवर्त्तते तेनायमल्विधिः । अल्विधौ च स्थानिवत्ता न भवति इति यकारोऽत्र न अच् ततो धकारस्य द्वित्वम् ॥ नैवम् । अल्विधावपि क्वचित् स्थानिवत्ता भवत्येव । तथा च—

५० । अचः परस्मिन् पूर्वविधौ ॥ १।१।५७ ॥

दी—। अल्विध्यर्थमिदम् । परनिमित्तः अजादेशः स्थानिवत् स्यात्, स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्त्तव्ये । इति यणः स्थानिवद्भावे प्राप्ते—

This rule is for स्थानिवत्ता in the matter of operations due to letters in the स्थानिन् । The sense is—substitutes of vowels due to what immediately follows them are to be deemed as

स्थानिवत् when some operation has to be done on anything that precedes the vowels. Thus the substitute य् of the vowel ई here due to the immediately following उ is to be deemed as a vowel in the matter of the duplication of the ध् that precedes the ई। The duplication being apparently barred we look forward.

मित—। स्थानिवत् इति आदेश इति च अनुवर्त्तते। परस्मिन् अच आदेशः पूर्वविधौ स्थानिवत् इत्यन्वयः। परस्मिन् अव्यवहितपरस्मिन् निमित्ते यः अचः आदेशः 'परनिमित्तकः अजादेशः' इत्यर्थः 'पूर्वस्य' तस्यैव 'स्थानिभूतादचः' पूर्वस्य 'पूर्वत्वेन दृष्टस्य विधौ कर्त्तव्ये स्थानिवत् स्यात्' इत्यर्थः। परत्वं पूर्वत्वञ्च आपेक्षिकम्। इह यदपेक्षया परत्वं तदपेक्षयैव पूर्वत्वमिति हि न्याय्यम्। तदाह 'स्थानिभूतादचः पूर्वत्वेन इत्यादि। अयं तु पूर्वो नाव्यवहितः। निमित्तत्वेन आश्रितः पूर्व एव अव्यवहितो भवति इतरस्तु व्यवहितोऽपि स्यात्। एतदर्थमेवोक्तं 'पूर्वत्वेन दृष्टस्य' इति न तु 'पूर्वस्य' इति॥ इह उकारे अव्यवहिते ईकारस्य आदेशो यकारः ईकारस्य पूर्ववर्त्तिनो धकारस्य द्वित्वविधौ स्थानिवत्। तथा सति प्राप्त एव द्वित्वनिषेधः। परिहरन्नाह—

## ५१। न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु॥ १।१।५८॥

दी—। पदस्य चरमावयवे द्विर्वचनादौ च कर्त्तव्ये परनिमित्तोऽजादेशो न स्थानिवत् इति स्थानिवद्भावनिषेधः।

In a पूर्वविधि with reference to giving the final element to a पद, to duplication, to addition of वर, to elision of य, to accent, to सवर्ण, to अनुस्वार, to lengthening of a vowel, to substitution of जश् and चर् a substitute for a vowel due to what immediately follows is not treated as similar to what it replaces. Hence in the matter of the duplication of ध the substitute य for ई is not स्थानिवत्; so "अनचि च" does not apply and the duplication is available.

मित—। स्थानिवत् आदेशः, अचः परस्मिन् पूर्वविधौ, इति सर्वमनुवर्त्तते। परस्मिन् अच आदेशः पूर्वविधौ पदान्तादिविधिषु न स्थानिवत् इत्यन्वयः। पदस्य अन्त्यश्चरमावयवः पदान्तः। वरे इति सप्तम्यन्तस्यानुकरणं प्रथमान्तम्। विधिः विधानम्, भावे क्तिः। पदान्तस्य द्विर्वचनञ्च वरे च इत्यादि द्वन्द्वः। तेषां विधिरिति द्वन्द्वान्ते श्रूयमाणेन विधिशब्देन द्वन्द्वाङ्गानां प्रत्येकं सम्बन्धः। तेन पदान्तविधौ द्विर्वचनविधौ इत्यादि लभ्यते। तत्र पदान्तस्य विधौ करणे इत्यादि कर्मषष्ठ्या समासः॥ पूर्वविधौ अजादेशस्य या स्थानिवत्ता विहिता सा पदस्य चरमावयवे कर्त्तव्ये, द्विर्वचने कर्त्तव्ये, वरे परे यः प्राप्तस्तस्मिन् कर्त्तव्ये यलोपे कर्त्तव्ये स्वरे कर्त्तव्ये, सवर्णे कर्त्तव्ये, अनुस्वारे कर्त्तव्ये, दीर्घे कर्त्तव्ये, जश्भावे कर्त्तव्ये, चर्भावे च प्रतिषिध्यते॥ पदान्तविधौ—कौ स्तः इत्यत्र स्तः इति असधातोरकारस्य लोपादेशे रूपम्। लोपश्चायं परनिमित्तकः अजादेशः। कौ इत्यत्र पदान्त औकारः। यद्यकारस्य लोपो न स्यात् औकारस्य आव् इत्यादेशः स्यात्। परं स कौ इति पदस्य चरमावयवः स्यात्। लुप्ते तु अकारे आवादेशे कर्त्तव्ये स लोपो न स्थानिवत्, तेन काव् स्तः इति न भवति॥ द्विर्वचनविधौ—सुध् य् उपास्यः (?) इत्यत्र धकारस्य द्वित्वे कर्त्तव्ये यकारो न स्थानिवत्। तेन द्वित्वं भवति सुध् ध् य् उपास्यः (?) इति च रूपम्॥ वरेविधौ—पुनः पुनर्गच्छति इत्यर्थे या धातोर्यङि वरच् प्रत्यये यायाय वर इति स्थिते "अतोलोपः" (६।४।४८) इत्यकारलोपे यावाय वर इति। अयञ्च परनिमित्तको लोपः पूर्वस्य यकारस्य लोपे कर्त्तव्ये न स्थानिवत्। तेनेह यकारवकारयोरनन्तर्यं प्राप्तम् "लोपो व्योर्वलि" इति यलोपश्च भवति। न च पुनरेतदर्थं 'वरे' ग्रहणं कृतम्। यायावर इति स्थिते यङो यः अकारलोपो भूतः परनिमित्तकः तस्य स्थानिवत्त्वे तु ङित्त्वमार्धधातुकत्वमच्त्वञ्चाश्रित्य "आतो लोप इटि च" (६।४।६४) इति आकारलोपः प्राप्तः। स इह निषिध्यते। इदमेव वरेग्रहणस्य प्रयोजनम्। तेन यायावर इति रूपम्। अकृते वरेग्रहणे सूत्रे यलोपग्रहणात् यलोपः स्यादेव परम् आकारोऽपि लुप्येत। ततः पुनर्यलोपे यावर इति च रूपं स्यात्॥ यलोपविधौ—कण्डूय इति स्वार्थिकयगन्तात् क्तिच् प्रत्यये कण्डूय ति इति स्थिते "अतो लोपः" इति अकारलोपे कण्डूय् ति इति स्थिते "लोपो व्योर्वलि" इति य-लोपे कर्त्तव्ये अकारलोपो न स्थानिवत्। तेन यलोपे कण्डूतिरिति रूपम्॥ स्वरविधौ कर्त्तुमिच्छति इति कृ सन् ण्वुल्=चिकीर्षं अक

इति स्थिते "अतो लोपः"। चिकीर्ष् अक इति जाते प्रत्ययात् पूर्वं ईकारः "लिति" इति उदात्तो भवति, अकार लोपस्य स्थानिवत्त्वे तु न स्यात्॥ अनुस्वारविधौ—पिष-धातोर्लोटि मध्यमैकवचने श्नमि कृते पिनष् हि इति स्थिते "श्नसोरल्लोपः" (६।४।१११) इत्यकारलोपे पिन्ष् हि इति। ततो "नश्चापदान्तस्य झलि" इति पूर्वस्य नकारस्य अनुस्वारे कर्त्तव्ये परनिमित्तकस्य अकारलोपस्य स्थानिवत्ता न भवति इति झल्परोऽयं नकारः। तेन जातं पिंष् हि इति॥ सवर्णविधौ—हेर्धित्वे पिंष् धि इति। तस्य षकार सन्निधौ टवर्गादेशे पिंष् ढि इति। षकारस्य "झलां जश् झशि" (८।४।५३) इति जश्त्वे षकारस्य डकारे पिंड् ढि इति। इह "अनुस्वारस्य ययि परसवर्णः" (८।४।५८) इति णकारे कर्त्तव्ये प्राग्वत् अकारलोपस्य न स्थानिवत्ता। तेन ययि परे णकारे परसवर्णे कृते सिद्धं पिण्ड्ढि इति, "झरो झरि सवर्णे" (८।४।६५) इति पाक्षिके डलोपे पिण्ढि इति च॥ दीर्घविधौ—प्रतिपूर्वात् दिवधातोः कनिन् प्रत्यये 'प्रतिदिवन्' इति प्रातिपदिकम्। तस्य तृतीयैकवचने प्रतिदिवन् आ इति स्थिते "अल्लोपोऽनः" इति परनिमित्तके अकारलोपे जातं प्रतिदिवन् आ इति। "हलि च" (८।२।७७) इति 'दि' इत्यस्य दीर्घे कर्त्तव्ये अकारलोपो न स्थानिवत्। तेन दिविति हल्परं सिद्धञ्च प्रतिदीव्ना इति॥ जश्विधौ—धाधात्तोर्लोटि मध्यमबहु-वचने दधा ध्वम् इति स्थिते "श्नाभ्यस्तयोरातः" (६।४।११२) इत्याकारलोपे दध् ध्वम् इति। "दधस्तथोश्च" (८।२।३८) इति दकारस्य धत्वे ध ध् ध्वम् इति। तत्र 'ध्' इत्यस्य "झलां झश् झशि" (८।४।५३) इति जश्त्वे दकारे कर्त्तव्ये परनिमित्तक आकारलोपो न स्थानिवत्। तेन् झश्परत्वात् दकार एव। धद्ध्वम् इति च रूपम्॥ चर्विधौ—अदधातोर्लिटि घस्लादेशे अतुसि जघस् अतुस् इति स्थिते "गमहन—" (६।४।९८) इत्युपधालोपे जघ्स् अतुस् इति। अत्र सकारे परे "खरि च" (८।४।५५) इति घकारस्य चर्त्वे ककारे कर्त्तव्ये अकारलोपो न स्थानिवत्, तेन जक्स् अतुस् इति जाते "शासिवसिघसीनाञ्च" (८।३।६०) इति षत्वे जक्षतुः। भवतु पूर्वस्य चर्त्वं प्रतिस्थानिवत्ता मा भूत्, षत्वं पुनः परस्य विधिः, तत्प्रत्यस्तत्रैव स्थानिवत्ता। ततो भवति जक् सतुरिति न च जक्षतुरिति। अत्रोच्यते "पूर्वत्रासिद्धे च" इत्यस्यात्र वार्त्तिकम्। तेन पूर्वत्रासिद्धे कर्त्तव्ये स्थानिवत्ता नास्ति। "इण्कोः" (८।३।५७) इति षत्वप्रापकं पूर्वत्रासिद्ध-प्रकरणस्थं सूत्रम्। तत्

प्रति स्थानिवत्ता नास्ति इति यथेष्टं रूपसिद्धिः ॥ प्रकृते सुघ् घ् य् उपास्य: (?) इति स्थिते—

५२ । झलां जश् झशि ॥ ८।४।५३ ॥

दी—। स्पष्टम् । इति धकारस्य दकारः ।

A जश् letter replaces a झल् letter when a झश् letter follows, Referring to the Siva-sutras we see that झल् stands for consonants except य, र, ल, व ; जश् for ज, ब, ग, ड, द ; and झश् for झ, भ, घ, ढ, ध, ज, ब, ग, ड, द । Thus ध is a झल् as well as a झश् । Hence in सुध् ध् the first ध being treated as a झल् and the second as a झश् the present rule applies, and in place of the first ध we substitute a जश् । Also among the जश् letters the most similar to ध is द having the same place of origin. Substituting द we get सुद् ध् य् उपास्य : (?) and look forward.

मित—। झल् इत्यन्तस्थावर्जितानां व्यञ्जनानां संज्ञा। जश् इति वर्गतृतीयाः। झश् इति वर्गतृतीया वर्गचतुर्थाश्च ॥ अन्तस्थावर्जितानां व्यञ्जनानां स्थाने वर्गतृतीया भवन्ति वर्गतृतीये वर्गचतुर्थे वा परे इति सूत्रार्थः। तदिह द्वितीये धकारे वर्गचतुर्थे परे प्रथमधकारस्य स्थाने वर्गतृतीयो भवति। स च स्थानत आन्तर्य्यात् दन्त्यस्य धकारस्य दन्त्य एव दकारः। एवं सुद् ध् य् उपास्य: (?) इति जाते यकारस्य लोपः प्राप्तः। किमिदं लोपो नाम इत्याकाङ्क्षायामाह—

५३ । अदर्शनं लोपः ॥ १।१।६० ॥

दी—। प्रसक्तस्य अदर्शनं लोपसंज्ञं स्यात् ।

लोप is non-perception of what is expected.

मित—। अदर्शनमिह नेत्राभ्यां श्रोत्राभ्यां वा अनुपलब्धिः। तत् लोप इत्युच्यते ॥ यद्येवं राजपुरुष इत्यत्र 'राज' इत्यंशे रकार आकारो जकारः अकारश्च दृश्यते। एतद्व्यतिरिक्तस्य सर्वस्यैव अदर्शनमस्ति। तत् किमिह प्रोक्तवर्णचतुष्टय-भिन्नस्य कृत्स्नस्य वर्णजातस्य लोपो मन्तव्यः ? न इत्याह 'प्रसक्तस्य' इत्यादि। तत्

यत् प्रसक्तं तस्यैवादर्शनं लोपः। दर्शनप्रसङ्गे सति यद्यदर्शनं तदेव लोपो विज्ञेयः। 'राज' इतीह राजन्-शब्दस्य शेषः। नकारस्येह दर्शनप्रसङ्गोऽस्ति न च दर्शनम्। नकारस्यैवात्र लोपो वेदितव्यो नान्यस्य कस्यचित्॥ भवतु, यकारस्य किमिति लोपः शङ्क्यते?

## ५४। संयोगान्तस्य लोपः॥ ८।२।२३॥

दी—। संयोगान्तं यत् पदं तदन्तस्य लोपः स्यात्। इति यलोपे प्राप्ते—

The last letter of a पद ending in a संयोग has to be elided. Here सुधी is a पद by the rule "प्रत्ययलोपे—", the final is ई which has been replaced by य; so य is पदान्त and द् ध् य् is a संयोग। The elision of य thus presenting itself, we look forward.

मित—। "पदस्य" (८।१।१६) इत्यधिकृतमस्ति। संयोगान्तस्य पदस्य लोपः इत्यन्वयः। "हलोऽनन्तराः संयोगः"। संयोगः अन्त्यचरमावयवो यस्य तादृशस्य पदस्य लोपः स्यात्। अयञ्च लोपः "अलोऽन्त्यस्य" इति अन्त्यवर्णस्यैव न सर्वस्य पदस्य॥ इह सुधीभिः उपास्यः इति तृतीयाया लोपः। लोपेऽपि "प्रत्ययलोपे—" इति प्रत्ययलक्षणं पदत्वमस्ति। तेन ईकार इह पदान्तः। तस्य स्थाने यो यकारः सोऽपि पदान्तः। पदञ्च संयोगान्तम्। तेन यलोपः प्राप्तः। परिहारमाह—

दी—। "यणः प्रतिषेधो वाच्यः" (वार्त्तिक)।

Prohibition of यण् has to be declared in the matter of the elision of the final of a पद ending in a संयोग। Hence य is here retained.

मित—। संयोगान्तो यण् न लुप्यते, इत्यर्थः। एतेन यलोपः परिहृतः॥ भाष्ये तु प्रत्याख्यातमेतद्वार्त्तिकम्। इह, अन्यनिरपेक्षो लोपः अन्तरङ्गः। शब्दान्तरस्थितमुकारादिलक्षणमाश्रित्य प्रवृत्तो बाह्यापेक्षो यण् बहिरङ्गः। "असिद्धं बहिरङ्गमन्तरङ्गे" इति यणः असिद्धत्वात् संयोगान्तं पदं नास्ति इति लोपो न प्रवर्त्तते इति समाहितं भाष्ये॥ "एवं सुद् ध् य् उपास्यः (?) इति स्थिते—

टी—। "यणो मयो द्वे वाच्ये" (वार्त्तिक)। 'मयः' इति पञ्चमी, यणः इति षष्ठी इति पक्षे यकारस्यापि द्वित्वम्। तदिह धकारयकारयोर्द्वित्व-विकल्पाच्चत्वारि रूपाणि—एकधमेकयम्, द्विधं द्वियम्, द्विधमेकयम्, एकधं द्वियम्। सुद्ध्युपास्यः॥ मद्ध्वरिः। धात्त्रंशः। लाकृतिः।

This Varttika is explained differently, thus—"A मय् letter coming after a यण् letter is doubled" or "A यण् letter coming after मय् letter is doubled". The reason is यणः and मयः are ambiguous forms either being taken as षष्ठी and the other as पञ्चमी। The first explanation supposes यणः to be पञ्चमी and मयः to be षष्ठी। In the second, मयः is पञ्चमी and यणः is षष्ठी। This doubles the य also in our case. Hence here four forms are available because the doubling of both ध and य is optional. Thus सुध्युपास्य with one ध and one य, सुद्ध्य्युपास्यः with two of both, सुद्ध्युपास्यः with two धs and one य, सुध्य्युपास्यः with one ध and two यs. Similarly मधु अरि मद्ध्वरि, धातृ अंश धात्रंश, लृ आकृति लाकृति।

मित—। इह भाष्ये द्वावपि पक्षावुक्तौ—'यणः' इति पञ्चमी 'मयः' इति षष्ठी, 'मयः' इति पञ्चमी 'यणः' इति षष्ठी इति च। द्वितीये पक्षे यकारस्य द्वित्वम्। 'वा' इति चानुवर्त्तते। तेन द्वित्वविकल्पः॥ उदाहरणे सुद्ध्युपास्य इति द्विधमेकयं रूपम्। सुध्युपास्य इति एकधमेकयम्। सुद्ध्य्युपास्य इति द्विधं द्वियम्। सुध्य्यु-पास्य इति एकधं द्वियम्॥ मधोर्दैत्यविशेषस्य अरिः इति समासे सुब्लुकि मधु अरि इति स्थिते मध्व् अरि। धकारस्य द्वित्वादिकं प्राग्वत्। यणो वकारस्यापि द्वित्वे मद्ध्व्व् अरि। "लोपो व्योर्वलि" इति प्रथमवकारस्य लोपे मद्ध्व् अरि मद्ध्वरि इत्यादि॥ धातुः अंश इति समासे धातृ अंश इति स्थिते धात्र् अंश। तकारस्य द्वित्वे धात्त्र् अंश। रेफस्य द्वित्वे धात्त्र्र् अंश। "रो रि" इति प्रथम रेफस्य लोपे धात्त्रंशः॥ ननु इह "यणोमयो—" इति द्वित्वस्य असिद्धत्वात् "लोपो व्यो—" इति न प्रवर्त्तते, नापि "रो रि" इति, तत् कथं कृते द्वित्वे प्रथमस्य लोपः? उच्यते— "पूर्वत्रासिद्धीयमद्विर्वचने" इति कात्यायनवचनाद्भविष्यति। एतत्तु परिभाषारूपेण पठितम्। "पूर्वत्रासिद्धाधिकारे यत् कार्य्यं तत् द्विर्वचनादन्यत्र असिद्धं भवति" इति

च तस्यार्थः। तेन सिद्धमिह द्वित्वं लोपश्च सिद्धः॥ ऌकारस्य आकृतिः इति समासे ऌ आकृति इति स्थिते ल् आकृति इति। निमित्ताभावाद्द्वित्वं न भवति, लाकृति॥ इह मुद्रितेषु पुस्तकेषु सर्वेष्वपि प्रक्रियादशायाम् 'उपास्यः' इति विसर्गो दृश्यते। स तु न सङ्गच्छते। सुधीभिः सुधियां वा उपास्यः इति विग्रहे सति समासे प्रातिपदिकत्वम्। ततः सुब्लोपः, तदनु सन्धिकार्य्यम्। तेन च परिनिष्ठितं 'सुध्युपास्य' इति निर्विसर्गकं प्रातिपदिकशरीरम्। पश्चात्तु प्रातिपदिकार्थे वा प्रकरणवशाद्वा प्रथमायां सत्यां विसर्गः प्राप्नोति। अत उक्तं प्राक् सन्धिकार्य्यकाले लिपिकरप्रमादजो विसर्ग इति।

## ५५। नादिन्याक्रोशे पुत्रस्य ॥८।४।४८॥

**दी—। पुत्रशब्दस्य न द्वे स्त आदिनीशब्दे परे आक्रोशे गम्यमाने। पुत्रादिनी त्वमसि पापे। 'आक्रोशे' किम्? तत्त्वकथने द्विर्वचनं भवत्येव—पुत्त्रादिनी सर्पिणी।**

The त of पुत्र is not doubled when आदिनी follows and censure is implied. Thus पुत्रादिनी etc.—Wretch you ate up your child. Why say आक्रोशे? Witness पुत्त्रादिनी etc.—The serpent eats up its brood—where the त is doubled in a statement of fact.

मित—। 'द्वे' इत्यस्ति। आदिनी पुत्रस्य न द्वे आक्रोशे इत्यन्वयः। 'आदिनी इति पुत्रादिनीशब्दस्य उत्तरार्द्धस्यानुकरणम् लुप्तसप्तम्यन्तम्। तदाह 'आदिनीशब्दे परे' इति॥ पूयते अनेन इति पुत्रः। पूधातोरौणादिकः क्तः करणे। "पुवो ह्रस्वश्च" ( उ० ४।१६४ ) इति ह्रस्वः। इह पुत्र इति स्थिते "अनचि च" इति उकारादुत्तरस्य तकारस्य वैकल्पिकं द्वित्वं प्रतिषिध्यते॥ पुत्रान् अत्तीति "सुप्यजातौ—" इति णिनिस्ततो ङीप्॥ आदिनीशब्दे परे एकस्तकारः अन्यत्र एको वा द्वौ वा इत्याशयः॥ आक्रोशो निन्दा। तत्त्वकथनं स्वरूपवर्णनम्। निन्दायां द्वित्वनिषेधः। स्वरूपवर्णने वैकल्पिकं द्वित्वम्, पुत्रादिनी सर्पिणी इत्यपि भवति॥ यत्तु पुत्शब्दात् त्रायतेः क प्रत्यये पुत्त्र इति तदन्यत्, तस्य च स्वभावादेव द्वौ तकारौ॥ इह 'आदिनीशब्दे परे' इत्यस्य 'आदिनीशब्दे उत्तरपदे' इति तु

नार्थः। "सुप्यजातौ—" इति समासे आदिन्शब्द एव उत्तरपदम् न आदिनी शब्दः। स च प्राक् सुबुत्पत्तेः प्राक् च स्त्रीप्रत्ययोत्पत्तेः समासः। यथाकथञ्चित् समासे यदि आदिनीशब्दः पुत्रशब्दस्य परे दृश्यते तदायं निषेधः। तत्त्वबोधिन्यां तु 'न आदिनि आक्रोशे' इति च्छेदः। स्त्रीषु आक्रोशः प्रायेण प्रवर्त्तते इति स्त्रियामुदाहरणम्। अयमेव ज्यायान् पक्षः।

**दी—। तत्परे च (वार्त्तिक)। पुत्रपुत्रादिनी त्वमसि पापे।**

Also if पुत्रादिनी follows. Thus पुत्रपुत्रादिनी &c.—You ate up your child's children, you wretch!

मित—। 'पुत्रस्य' इत्यस्ति। तत्परे च पुत्रस्य न द्वे इत्यन्वयः। "स आदिनीशब्दो यस्मात् परस्तत्रापि (तस्मिंश्च) परतः पुत्रशब्दस्य द्विर्वचनं न भवति" इति हरदत्तस्य व्याख्यानम्। तथैव नागेशस्य। परमेतेन पुत्रशिष्यादिनी, पुत्रपौत्रादिनी इत्यादिष्वपि निषेधः प्राप्नोति। तत्तु नेष्यते। तदिदमस्तु व्याख्यानम्—पुत्रस्य इत्यस्ति। आदिनि (आदिनी वा लुप्तसप्तम्यन्तम्) इत्यप्यस्ति। (तत्परे इति आदिनि इत्यस्य विशेषणम्। पुत्रस्य तत्परे आदिनि (आदिनी वा) च द्वे न इति मिलितोऽन्वयः। 'पुत्रस्य' पुत्रशब्दस्य तकारस्य 'तस्मात्' पुत्रशब्दात् 'परः' यः 'आदिन् शब्दः' ('आदिनी शब्दो' वा) तस्मिन् परे पुत्रपूर्वके आदिन्शब्दे परे इत्यर्थः द्वे न भवतः। पुत्रस्य पुत्राः पुत्रपुत्राः। तानत्तीति विग्रहे द्वित्वनिषेधे पुत्रपुत्रादिनी इति॥

**दी—। "वा हतजग्धयोः" (वार्त्तिक)। पुत्रहती—पुत्त्रहती। पुत्रजग्धी—पुत्त्रजग्धी।**

The duplication is optional if हत or जग्ध follows and censure is implied. Thus पुत्र &c.—One that had killed her son &c.

मित—। 'आक्रोशे पुत्रस्य' इत्यस्ति। हतशब्दे जग्धशब्दे च परे पुत्रशब्दस्थिततकारस्य वा द्वित्वं स्यात् आक्रोशे गम्यमाने। तथा च हतः पुत्रः अनया पुत्रहती पुत्त्रहती वा। आहिताग्न्यादित्वात् निष्ठायाः परनिपातः। "याथघञ्—

इत्यन्तोदात्तः। "अस्वाङ्गपूर्वपदाद्वा" इति ङीष्॥ "अनचि च" इति सिद्धे द्वित्वविकल्पे नियमार्थं वचनम्। "पुत्रस्य क्वाले चेत् हतजग्धयोरेव आक्रोशे एव इति नियमार्थमिदम्" इति नागेशः॥

## ५६। त्रिप्रभृतिषु शाकटायनस्य ॥८।४।५०॥

दी—। त्र्यादिषु वर्णेषु संयुक्तेषु वा द्वित्वम्। इन्न्द्रः—इन्द्रः राष्ष्ट्रम्—राष्ट्रम्।

Sākatayana says there is no duplication when more than two consonants are con-joined; others differ, hence the duplication is optional in such cases. Thus इन्द्र without duplication, and इन्न्द्र with न doubled &c.

मित—। 'न' इत्यस्ति 'द्वे' इति च। त्रिप्रभृतिषु शाकटायनस्य द्वे न इत्यन्वयः। 'त्रिप्रभृतिषु' बहुषु हल्सु संयुक्तेषु 'शाकटायनस्य' आचार्य्यस्य मतेन 'द्वे न' भवतः अन्येषामाचार्य्याणां भवत एव। इन्द्र इत्येको नकारः शाकटायनस्य, द्वावपि नकारावन्येषामाचार्य्याणाम्। शिष्याणामुभयमेव प्रमाणम्, अतो विकल्पः। तदाह 'वा द्वित्वम्' इति॥

## ५७। सर्वत्र शाकल्यस्य ॥८।४।५१॥

दी—। द्वित्वं न। अर्कः। ब्रह्मा।

The duplication is no-where allowed by Sākalya. Thus अर्क &c. without the duplication of क &c.

मित—। 'न द्वे इत्यस्ति। 'शाकल्यस्य' आचार्य्यस्य मतेन न केवलं त्रिप्रभृतिषु अपि तु 'सर्वत्र' यत्र यत्र प्राप्तिः तत्र तत्रैव 'द्वे न' भवतः। 'अर्कः' इत्यत्र "अचो रहाभ्यां द्वे" इति यत् ककारस्य द्वित्वं तन्न भवति। "अनचि च" इति यत् रेफस्य द्वित्वं तदपि न॥ 'ब्रह्मा' इति मकारस्य द्वित्वं न॥

## ५८। दीर्घादाचार्य्याणाम् ॥८।४।५२॥

दी—। द्वित्वं न। दात्रम्। पात्रम्।

My revered tutor does not allow duplication after a long vowel. Thus दात्तम् etc.

मित—। 'न द्वे' इत्यस्ति। आचार्य्याणां मतेन दीर्घात् द्वित्वं न भवति॥ ननु के इमे आचार्य्याः? यदि शाकल्यशाकटायनौ, 'आचार्य्ययोः' इति स्यात्। अथ केषाञ्चिन्मतमेतत्, 'एकेषाम्' इति वदेत् लाघवञ्च स्यात्। यदि तु सर्वथा निर्विवादो द्वित्वनिषेधः 'सर्वेषाम्' इत्युच्येत "हलि सर्वेषाम्" (८।३।२२) इत्यत्र यथा। तन्मन्ये आत्मनो गुरुरिहाभिमतः। गौरवे बहुवचनम्। साचान्नाम्ना नाभिहितः "आत्मनाम गुरोर्नाम नामातिकृपणस्य च। श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः॥" इति निषेधात्॥ एवं सति नित्योऽयं निषेधः। तथापि "त्रिप्रभृतिषु—"इत्यत्र यत् राष्ट्र-मिति पाक्षिकं द्वित्वमुदाहृतं तन्मतान्तराभिप्रायेण, "त्रिप्रभृतिषु—" इत्येतत् प्रति "दीर्घादाचार्य्याणाम्" इत्यस्य असिद्धत्वाद्वा॥

५९। अचो रहाभ्यां द्वे॥८।४।४६॥

**दी—। अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः। हर्य्यनुभवः। नह्य्यस्ति।**

A यर् letter (consonants except ह) is optionally duplicated if coming after र or ह preceded by a vowel. Thus हर्य्यनुभव—realisation of Hari, नह्य्यस्ति—does not certainly exist. The optional forms are हर्यनुभव and नह्यस्ति।

मित—। यरः इत्यस्ति, वा इति च। 'अचः' इति 'रहाभ्याम्' इति च गम्यमानपरशब्दयोगे पञ्चमी। आद्यं रेफहकारौ विशिनष्टि, अचः परौ यौ रेफहकारौ इति। द्वितीयं यरः इत्यस्य विशेषणम्, रहाभ्यां परो यो यर् इति॥ यरिति हकार-वर्जितं व्यञ्जनम्। अचः स्वराः। प्रथमम् अच् तदनन्तरं रेफो वा हकारो वा ततो यर् इति विन्यासे सति यरो द्वित्वविकल्पः इत्यर्थः॥ हरेरनुभव इति समासे हरि अनुभव इति स्थिते इकारस्य यण्। हर् य् अनुभव इति जाते रेफादुत्तरस्य यकारस्य अनेन द्वित्वम्। पक्षे हर्यनुभव इति॥ रकारस्य तु "अनचि च" इति कृते द्वित्वे प्रथमस्य लोप इति प्रागुक्तम्॥ 'नहि अस्ति' इति स्थिते यणादेशे नह् य् अस्ति इति स्थिते अनेन यकारस्य द्वित्वे नह् य् य् अस्ति इति। पक्षे द्वित्वाभावे 'नह्यस्ति' इति॥

हकारस्य तु द्वित्वं न भवति। न हि हकारो यर् इति "अनचि च" इति न प्रवर्त्तते ॥

**६०। हलो यमां यमि लोपः ॥८।४।६४॥**

**दी—। हलः परस्य यमो लोपः स्याद्वा यमि।**

A यम् letter ( अन्तस्था or वर्गपञ्चम ) coming after a हल् is optionally elided if another यम् letter follows.

मित—। यम् इति वर्गपञ्चमा अन्तस्थाश्च। यमां यमि इति यथासंख्यं नेयम्। सप्तमीनिर्देशादव्यवहितपूर्वता। यकारस्य यकारे वकारस्य वकारे इत्येवं लोपः स्याद्वा। विकल्पस्तु "झयो होऽन्यतरस्याम्" (८।४।६२) इत्यतः अन्यतरस्यां शब्दस्यानुवर्त्तनाल्लभ्यते ॥ तत् पूर्वसूत्रोदाहरणयोः सति द्वित्वे अनेन लोपे हर्य्यनुभवः, नह्यस्ति ॥

**दी—। इति लोपपक्षे द्वित्वाभावपक्षे च एकयं रूपं तुल्यम्। लोपारम्भफलं तु "आदित्यो देवता अस्य इति 'आदित्यम्' हविः" इत्यादौ।**

Thus in the examples above, if we do not duplicate or if after duplicating we elide by this rule, the result is the same, *i. e.*, one with a single य। The utility of enjoining elision is seen in cases like आदित्य derived with the तद्धित affix ण्य as applied to a sacrificial offering in the sense "having आदित्य for the presiding deity."

मित—। पूर्वसूत्रे द्वित्वपक्षे हर्य्यनुभवः, द्वित्वाभावे हर्यनुभवः। अत्र सूत्रे लोपपक्षे हर्यनुभवः, लोपाभावे हर्य्यनुभवः। एवं यदि तदेव रूपद्वयम् किमनेन सूत्रेण? किमर्थमिह लोप आरभ्यते? उच्यते—पूर्वसूत्रे रहाभ्यामुत्तरस्य विधिः, इह हलमात्रात् परस्य। तेन यदा रेफहकारव्यतिरिक्तात् हलः परो यम् तदा पूर्वसूत्रं न प्रवर्त्तते अनेन तु सिध्यति। तथा च अदितेर्जातः इत्यर्थे "दित्यदिति—" (४।१।८५) इति ण्यप्रत्यये आदित्यः। आदित्यो देवता अस्य इत्यर्थे "सास्य देवता" (४।२।२४) इति पुनर्ण्यप्रत्यये आदित्य ण्य इति स्थिते "यस्येति च" इत्यकारलोपे

आदित् य य इति। "हलो यमां—" इति तकारात् परस्य यकारस्य लोपे आदित्यः, लोपाभावे आदित्त्यः। असत्यस्मिन् सूत्रे एक यकारकं रूपं न सिध्यति॥

**दी—। 'यमां यमि' इति यथासंख्यविज्ञानान्नेह—माहात्म्यम्, तादात्म्यम्।**

The म after त does not elide in माहात्म्य and the like because in यमां यमि we have to take the cause for and the recipient of the change in order. In other words य, व, र, ल, ञ, म, ङ, ण, न are elided when any of them is followed by itself. In माहात्म्य the म is after a हल् and is a यम्, the य following is also a यम्; but it is not the same यम् that follows; hence the rule does not apply and there is no elision.

मित—। माहात्म्यम् इत्यत्र तकारोऽयं हल्, ततः परं मकारो यम्, तदनु च यकारो यम्। तदिह हल उत्तरो यम् यमश्चानन्तरं पुनर्यम्। परं पूर्वस्माद्भिन्नोऽयं यम्। अतः पूर्वस्य यमो न लोपः॥

**६१। एचोऽयवायावः॥६।१।७८॥**

**दी—। एचः क्रमात् अय्, अव्, आय् आव् एते स्युः अचि।**

The four एच् letters, viz, ए, ओ ऐ, औ are respectively changed into अय्, अय्, आव् and आव् when a vowel follows.

मित—। अचि इत्यनुवर्त्तते। एच इति षष्ठी। एच् इति ए, ओ, ऐ, औ, इति चत्वारः स्थानिनः। अय्, अव्, आय्, आव् इत्यपि चत्वार एव आदेशाः। एवं समसंख्यकत्वात् स्थान्यादेशयोः "यथासंख्यम्—" इति एकारस्य अय्, ओकारस्य अव्, ऐकारस्य आय्, औकारस्य आव् इति नेयः। तदाह क्रमादिति॥ इह आदेशेषु "हलन्त्यम्" (१) इति यकारवकारयोरित्संज्ञा अस्ति न वा। सत्यां संज्ञायां किं स्यात्?

**६२। तस्य लोपः॥१।३।९॥**

**दी—। तस्य इतो लोपः स्यादिति यवयोर्लोपो न, उच्चारणसाम-**

र्थ्यात्। एवञ्च इत्संज्ञापीह न भवति॥ हरये। विष्णवे। नायकः। पावकः।

The य and व here do not elide as is expected by the rule "तस्य लोपः" which wants the इत् to disappear, because then the sage would not have pronounced them at all. For this very reason the य and व are not here इत् at all. The examples are हरे ए हरये, विष्णो ए विष्णवे, नै अक नायक, पौ अक पावक।

मित—। यदि इत्, लोपो भविष्यति॥ न भविष्यति। लोपे इष्टे लोपफलाभावात् उच्चारणमेव न स्यात्। तत् नेमौ यकारवकारौ इतौ॥ चतुर्थ्या एकवचने हरि ङे, विष्णु ङे इति स्थिते गुणे इतोलोपे हरे ए विष्णो ए इति। अयादेशे अवादेशे च हरय् ए, विष्णव् ए इति—हरये, विष्णवे। ण्वुल् प्रत्यये नी ण्वुल्, पू ण्वुल् इति स्थिते इत्कार्य्ये अकादेशे च नी अक, पू अक इति। वृद्धौ नै अक, पौ अक इति। आयादेशे आवादेशे च प्रथमैकवचने नायकः, पावकः॥

## ६२। वान्तो यि प्रत्यये॥६।१।७९॥

**दी—। यकारादौ प्रत्यये परे ओदौतोः अव् आव् एतौ स्तः। गोविकारो गव्यम्। "गोपयसोर्यत्" (१५३८)। नावा तार्य्यं नाव्यम्। "नौवयोधर्म—" (१६४३) इत्यादिना यत्।**

ओ and औ change into अव् and आव् if an affix with य leading in it follows. Thus गव्य in the sense 'produce of a cow' with यत् after गो by the rule "गोपय—" (1538). Similarly नाव्य in the sense 'crossable in a boat with यत् after नौ by the rule "नौवयो—" (1643).

मित—। वकारः अन्तः अन्तावयवो यस्य स वान्तः। प्रागुक्ता आदेशा लक्ष्यन्ते। तेषु च अवावौ वान्तौ। तदाह 'अव् आव् एतौ' इति॥ यि यकारे। प्रत्यये इत्यस्य विशेषणम्। इह 'यि' इत्यल्मात्रं सप्तम्यन्तमाश्रित्य विधिरुच्चार्य्यते। ईदृशे स्थले न केवलमुच्चारिते वर्णे परे विधिः प्रवर्त्तते, अपि तु यस्य यस्य आदौ स

वर्णः श्रूयते तत्र तत्र सर्वत्र प्रवृत्तिः। तदाह 'यकारादौ' इति। अत्र "यस्मिन् विधिस्तदादावल्ग्रहणे" इति परिभाषा मानम् ॥ अचि इत्यस्ति। एच इत्यप्यस्ति। एचो यो वान्तः अचि उक्तः स यि प्रत्ययेऽपि भवति इत्यर्थः। तथाच गोशब्दात् विकारार्थे "गोपयसो—" इति यत् प्रत्यये गो यत् इति स्थिते प्रत्ययस्य यकारादित्वात् 'गो' इत्यस्य भसंज्ञा। अनेन गव् य इति। गव् इत्यपि 'भ' एव न पदम्। तेन "लोपः शाकल्यस्य (६७—८।३।१९) इति "हलि सर्वेषाम्" (१७१—८।३।२२) इति वा इह वकारस्य लोपो न भवति। तेन गव्यमिति ॥ नावा तार्य्यम् इत्यर्थे "नौवयो—"(१६४३) इति यत् प्रत्यये नौ यत् इति स्थिते प्राग्वत् भसंज्ञा। अनेन सूत्रेण नाव् य इति। इहापि न वकारलोपस्ततो नाव्यमिति ॥ 'यि' किम्? गोभ्याम्। नौभ्याम् ॥ 'प्रत्यये' किम्? गोयानम्। नौयानम् ॥

**दी—। "गोर्यूतौ छन्दस्युपसंख्यानम्" (वार्त्तिक)। "अध्वपरिमाणे च" (वार्त्तिक)। गव्यूतिः। "ऊतियूति—" (३२७४—३।३।९७) इत्यादिना यूतिशब्दो निपातितः।**

गो takes अव् when यूति follows in the Vedas and also to indicate a stage of journey. Thus गव्यूति—pasture land also 2 crosas of journey. Here यूति is derived from यु with क्तिन् the ऊ being due to निपातन in the rule "ऊतियूति—" (3274).

मित—। वान्त इत्यस्ति। यूयते अस्यामिति युधातोः क्तिनि यूतिः। "ऊति यूति—" इति निपातनाद्दीर्घः ॥ "गोर्वान्तो भवति यूतौ उत्तरपदे छन्दसि" इत्यस्य इह उपसंख्यानं गणनं कर्त्तव्यम्। एतदपि स्मर्त्तव्यमित्यर्थः। किञ्च छन्दसि भाषायामपि अध्वनः परिमाणे अभिधेये गोस्तथा ॥ गवां यूतिः इति समासे गो यूतिः इति स्थिते अनेन गव्यूतिः गव्यूतिः गोप्रचारः ॥ छन्दसि किम्? गोयूतिः ॥ "गव्यूतिः स्त्री क्रोशयुगम्" इति क्रोशद्वयार्थे तु छन्दसि भाषायामपि अवादेशः ॥

**दी—। 'वान्तः' इत्यत्र वकारात् 'गोर्यूतौ' इत्यत्र छकाराद्वा पूर्वभागे "लोपो व्योः—" (८७३) इति लोपेन वकारः प्रश्लिष्यते। तेन श्रूयमाणवकारान्त आदेशः स्यात्। वकारो न लुप्यते इति यावत्।**

Here there was a व before the व in वान्त in the rule itself or before the छ in छन्दसि in the Varttika "गोर्यूतौ—"। This व has been elided by the rule "लोपोव्योः—" (873) and by transference of epithets it means 'with व attached', that is to say, the व of the वान्त substitute does not elide. Thus गव् यूति does not drop its व as it is expected to do, because गव् is a पद and "लोपः शाकल्यस्य" or "हलि सर्वेषाम्" applies.

मित—। ननु इह अवादेशे गव् यूति रिति स्थिते गवित्यस्य पदत्वात् "लोपः शाकल्यस्य" इति "हलि सर्वेषाम्" इति वा वकारस्य लोपः स्यात्। वकारपरित्राणार्थं वकारान्तरप्रश्लेषं दर्शयति—सूत्रे वान्त इति वस्तुतो व्वान्त इत्यस्य "लोपो व्योः—" इति वलोपे रूपम्। व्वान्त इति च व्-शब्दस्य वान्तशब्देन कर्मधारयः। 'व्' इति पुनर्लक्षणया व्-युक्त इत्यर्थे वर्त्तते। ततो व् चासौ वान्तश्च इत्यस्य वकारयुक्तो यो वान्त इत्यर्थः सम्पद्यते। वान्तस्तु वकारयुक्त एव, तस्य पुनर्वकारयुक्ततानिर्देशे वकारस्य लोपो न भवति इत्यायाति ॥ अयि भोः सौत्रस्यार्थे किमनया कष्टकल्पनया? भत्वादेव तत्र वलोपो न भविष्यति ॥ भवतु, तर्हि वार्त्तिके वकारप्रश्लेषं व्याख्यास्यामि। छन्दसि इति व्छन्दसि इत्यस्य रूपम्। व इति वकारयुक्तार्थे पृथक् पदम्। सूत्रात्लब्धस्य वान्त इत्यस्य विशेषणम्। तेन—गोः व् वकारयुक्तो वान्त आदेशः स्यात् यूतौ परे—इत्यर्थः। शेषं प्राग्वत् ॥ भाष्ये त्वेतन्न दृश्यते। तत् छान्दसो लोपाभावः। अध्वपरिमाणे च संज्ञाशब्दाः स्वतःप्रमाणमिति क्रोशयुगस्य संज्ञा गव्यूतिशब्दः सिद्ध्यति इति नागेशः ॥

## ६४। धातोस्तन्निमित्तस्यैव ॥६।१।८०॥

दी—। यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेशः, तर्हि तन्निमित्तस्यैव नान्यस्य। लव्यम्। अवश्यलाव्यम्। तन्निमित्तस्यैव इति किम्? ओयते। औयत।

The एच् of a root takes the वान्त substitute with a यकारादि affix immediately following only if the एच् is due to that affix. Thus when यत् is attached to लू (to reap) we have गुण due to यत् giving लो and then अव् yields लव्य। Similarly if ण्यत् is attached, वृद्धि follows owing to ण्यत् and then लौ takes आव

yielding लाव्य। The compound अवश्यलाव्य is of अवश्यम्—an अव्यय—and लाव्य, the म of अवश्यम् being elided. Why say तन्निमित्तस्यैव? Witness ओयते and औयत from वेञ् (to weave). Here we start with वे यक् ते (लट्) and आ वे यक् त (लङ्)। Changing व into उ by "वचिस्वपि—" we have उए य ते and आ उए य त। Next उए becomes उ by "सम्प्रसारणाच्च" (330—6. 1. 108). "अकृत् सार्वधातुकयोः दीर्घः" (2298—7. 4. 25) changes उ into ऊ। We have then ऊयते and आ ऊयत। If to the former we attach आङ् in the sense आ सम्यक् ऊयते we get आ ऊयते, *i. e.*, ओयते। This ओ is due to सन्धि and not to the affix यक्। Hence no अव् though through एकादेश the ओ is now a part of the root. In the latter example आ ऊ gives औ by वृद्धि owing to the rule "आटश्च" and the form is औयत। No आव् because the औ is not due to the affix यक्।

मित—। पूर्वसूत्रमनुवर्त्तते एच इति च। यि प्रत्यये तन्निमित्तस्यैव धातोरेचो वान्तः इत्यन्वयः। स यादिप्रत्ययो निमित्तं हेतुर्यस्य तस्यैव धात्ववयवस्य एचः स्थाने अव् आव् आदेशौ स्तः। नान्यनिमित्तकस्य इत्यर्थः॥ लवितुं योग्यमित्यर्थे लू यत् इति स्थिते "सार्वधातुकार्द्धधातुकयोः" इति गुणे लो यत् इति यन्निमित्तक ओकारः। अवादेशे लव्यम्॥ अवश्यं लवितुं योग्यम् इत्यर्थे लू ण्यत् इति स्थिते वृद्धौ लौ इति यादिप्रत्ययनिमित्तक औकारः। आवादेशे लाव्यम्। अवश्यं लाव्यम् इति मयूरव्यंसकादित्वात् समासे "लुम्पेदवश्यमः कृत्ये" इत्यादिना मकारलोपे अवश्यलाव्यम्॥ ओयते इत्यत्र वेञ् तन्तुसन्ताने इत्यस्मादाङ्पूर्वात् कर्मणि लटि कृते आ वे यक् ते इति। यक्प्रत्ययनिमित्तके सम्प्रसारणे आ, उ ए यक् ते इति। "सम्प्रसारणाच्च" इति 'उए' इत्यस्य पूर्वरूपे आ उ यक् ते इति। "अकृत्सार्व—" इति उकारस्य दीर्घे आ ऊ य ते इति। ऊङ् वे इत्यस्माज्जात ऊकारोऽपि धातुरेव। ततो गुणे एकादेशे ओ यते इति। "अन्तादिवच्च" इति ओकारोऽयं पूर्वस्य आकारस्य अन्तवत् परस्य ऊकारस्य आदिवत् गृह्यते। परादिवत्त्वे सति धातुत्वमस्ति। तेनेह धातोरोकारात् परो यादिप्रत्ययः। परं यादिप्रत्ययनिमित्तकं सम्प्रसारणमाश्रित्य प्राप्तोऽप्ययं न साक्षात् तन्निमित्तः। अन्यदपि पूर्वरूपगुणादिकं तस्य निमित्तमस्ति तेन

अवादेशो न भवति ॥ औयत इति शुद्धस्य तस्यैव धातोःकर्म्मणिलङि रूपम्। आड़ागमे आ वे यक् त इति स्थिते प्राग्वत् सम्प्रसारणादिषु कृतेषु आ ऊ य त इति। "आटश्च" इति वृद्धौ एकादेशे औ य त इति। इहापि यादिप्रत्यय-व्यतिरिक्तं निमित्तान्तमस्ति इति न आवादेशः ॥ उदाहरणयोरनयोराद्ये आकार उपसर्गः "प्रथमं धातुः साधनेन युज्यते। पश्चादुपसर्गेण" (परिभाषा) इति उपसर्गयोगहेतुकं कार्य्यम् औकारो बहिरङ्गम्, अन्तरङ्गमवादेशः। "असिद्धं बहिरङ्गमन्तरङ्गे" (परिभाषा) इति च अवादेशं प्रत्यसिद्ध औकारः। अतः औयते इति न साधु प्रत्युदाहरणम् कृतेऽपि अकृतेऽपि सूत्रे औयते इत्येव रूपं भवति। लव्यं लाव्यम् इत्यत्रापि "वान्तो यि—" इति पूर्वेणैव सिद्ध्यति। तत् किमर्थं सूत्रम्? उच्यते—अकृतेऽस्मिन् सूत्रे औयत इत्यत्र पूर्वसूत्रेण आवादेशे आव्यत इत्यनिष्टं स्यादतस्तत्परिहाराय कर्त्तव्यं सूत्रम् ॥

**६५। क्षय्यजय्यौ शक्यार्थे ॥६।१।८१॥**

**दी—। यान्तादेशनिपातनार्थमिदम्। क्षेतुं शक्यं क्षय्यम्। जेतुं शक्यम् जय्यम्। 'शक्यार्थे' किम्? क्षेतुं जेतुं योग्यं क्षेयं पापं जेयं मनः।**

क्षय्य and जय्य are allowable with यत् in the sense 'capable of'. The rule is merely to show by actual use the correctness of the यान्त substitute in the case of these two words with the यादि affix यत्। Thus क्षय्यम् effaceable, जय्यम् conquerable. Why say शक्यार्थे? Witness क्षेय and जेय without अयादेश with यत् meaning 'deserving to be' not 'capable of'. क्षेयं पापम्—sin deserves to be effaced, जेयं मनः—mind deserves to be conquered.

मित—। यि प्रत्यये वान्तादेश उक्तः। यान्तादेशोऽपि क्वचिदिष्यते इति प्रयोगेणैव तस्य साधुतां दर्शयितुमाह "क्षय्यजय्यौ" इत्यादि। विनापि विधिं सूत्रादिषु प्रयोगेण साधुताविज्ञापनं निपातनम् ॥ धातोः इत्यस्ति। धातोः सामर्थ्यात् क्षि धातोः जि धातोश्च क्षय्यशब्दो जय्यशब्दश्च भवति शक्यार्थे यत्प्रत्यये सति। क्षेतुं शक्यमिति क्षि यत् इति स्थिते गुणे क्षे यत्। इह अप्राप्तः अयादेशः अत्रैव सूत्रे

निपातनात् क्रियते—क्षय् य क्षय्यः ॥ एवं जय्यः ॥ शक्यार्थः सकर्मकेष्वेव सम्भवति। क्षि इति अकर्मकोऽयं धातुः। तदिह अन्तर्भावितण्यर्थो ज्ञेयः। अन्यथा क्षेयं पापमिति न युज्यते। न स्वयं क्षीयते पापं क्षयमापाद्यते हि तत्। अथवा स्वादिगणीयोऽयं धातुः हिंसार्थे सकर्मकः। तथा च "न तद्यशः शस्त्रभृतां क्षिणोति" इति प्रयोगः ॥

६६। क्रय्यस्तदर्थे ॥६।१।८२॥

**दी—। तस्मै प्रकृत्यर्थाय इदं तदर्थम्। क्रेतारः क्रीणीयुः इति बुद्ध्या आपणे प्रसारितं क्रय्यम्। क्रेयमन्यत्, क्रयणार्हमित्यर्थः।**

क्रय्य is allowable with अय् substituted for ए when यत् follows if it means 'something for barter'. This sense follows from तदर्थ in which तत् refers to the meaning of the root क्री। But क्री means द्रव्यविनिमय—barter'. Hence तदर्थ is 'that which is intended for barter'. Thus क्रय्य is goods displayed in the shop so that customers might buy. With the other meaning i.e, in the sense 'wanted to buy' the form is क्रेय without अय्।

मित—। 'धातोः' इत्यस्ति। 'धातोः सामर्थ्यात् क्रीधातोः क्रय्यशब्दो भवति यत्प्रत्यये तदर्थे अभिधेये ॥ किमिदं तदर्थे इति? तस्मै यत् तत् तदर्थम्। तस्मिन् तदर्थे। अर्थशब्देन नित्यसमासः। तस्मै कस्मै? तस्मै धातवे लक्षणया धात्वर्थाय क्रीधात्वर्थाय इत्यर्थः। क्रीधातुरेवेह प्रकृतिः। तदाह 'प्रकृत्यर्थाय' इति। क्रीधात्वर्थश्च द्रव्यविनिमयः। तत् 'तदर्थे' द्रव्यविनिमये इति सूत्रार्थश्च—क्रीधातो यति क्रय्य भवति द्रव्यविनिमये यत् वस्तु तस्मिन् अभिधेये इति। एतदेवाह 'क्रेतारः क्रीणीयुः' इत्यादिना ॥ इह यति क्री य इति स्थिते गुणे क्रे य इति। तत्र विनिमयप्रयोजने द्रव्ये अभिधेये अयादेशनिपातनात् क्रय्यमिति। अन्यार्थे क्रेयमिति।

६७। लोपः शाकल्यस्य ।८।३।१९॥

**दी—। अवर्णपूर्वयोः पदान्तयोर्यवयोः वा लोपः अशि परे। "पूर्वत्रासिद्धम्" (१२—८।२।१) इति लोपशास्त्रस्यासिद्धत्वात् न स्वरसन्धिः।**

हर एहि—हरयेहि। विष्णा इह—विष्णाविह। श्रिया उद्यतः—श्रियायुद्यतः। गुरा उत्कः—गुरावुत्कः।

य and व at the end of a पद are elided according to Sakalya, *i. e.*, they are optionally elided if one of the letters अश् follows and अ or आ precedes. Thus हरे is a पद in हरे एहि। With अय् substituted for ए by "एचो—" (61—6. 1. 78) we get हरय् एहि। In this य comes after अ and ए, which is an अश्, follows. Hence शाकल्य would drop य and have हर एहि, others would retain it and say हरयेहि। Here एहि is आ इहि। Hence Sakalya's हर एहि seems to call for the rule "ओमाङोश्च" (80—6. 1. 95). But "पूर्वत्रासिद्धम्" (12) interferes and "ओमाङोश्च" which precedes the rule "लोपः शाकल्यस्य" deems the elision as not having taken place at all; consequently "ओमाङोश्च" does not operate. Similarly विष्णो इह, श्रिये उद्यतः, गुरौ उत्कः &c., give two forms each.

मित—। "पदस्य" (८।१।१६) इत्यधिक्रियते। "भोभगो—" (८।३।१७) इत्यतः 'अपूर्वस्य अशि' इत्यनुवर्त्तते। "व्योर्लघु—" (८।३।१८) इत्यतः 'व्योः' इति च। 'अपूर्वस्य' इति वचनविपरिणामेन 'अपूर्वयोः' इति गृह्यते। एभिः सह 'पदस्य अपूर्वयोर्व्योः लोपः अशि शाकल्यस्य' इत्यन्वयः। अकारः पूर्वो ययो स्तौ अपूर्वौ। तयोः। पदस्य यौ अपूर्वौ व्यौ तयो र्लोपः॥ इह अशि इति सप्तम्या निर्दिष्टमव्यवहितपूर्वस्य विधिं ज्ञापयति। लोप निमित्तादव्यवहितपूर्वौ यकारवकारौ यदि पदावयवौ तर्हि तौ पदस्य चरमावयवावेव। तदाह "पदान्तयोर्यवयोः" इति॥ शाकल्यस्य आचार्य्यस्य मतेन लोप इतरेषां तु दर्शनमेव। शिष्याणां पुनरुभयमपि प्रमाणम्। तदाह 'वा लोपः' इति॥ हरे एहि इत्यत्र हरे इति संबुद्धिः। एहि इति च आ इहि इति। अयादेशे हरय् एहि इति पदान्तो यकारः। तस्य वैकल्पिके लोपे हर एहि हरयेहि इति रूपद्वयम्॥ एवं विष्णो इह, श्रिये उद्यतः, गुरौ उत्कः इत्यादिष्वपि। उत्क उन्मनाः॥ भवतु, लोपे हरएहि इत्यत्र "अकृतव्यूहाः पाणिनीयाः कृतमपि कार्य्यं निवर्त्तयन्ति" इत्युक्तेः कृतस्यापि एकारस्य निवृत्त्या 'हर आ इहि' इति। "ओमाङोश्च" इति पररूपे 'हरा इहि' हरेहि इति कथं न भवति? कार्य्यस्य

अनिवर्त्तने पुनः 'हर एहि' इत्यत्र "वृद्धिरेचि" इति वृद्ध्या न कथम् 'हरैहि' इति वा ? अत्राह "पूर्वत्रासिद्धम्" इत्यादि। यलोपः अष्टमाध्याये तृतीये पादे विधीयते, पररूपं वृद्धिश्च षष्ठाध्याये। तत् परवर्त्ती लोपः पररूपादीन् प्रति असिद्धः। तेन सन्निकर्षाभावात् सन्धिर्नास्ति॥ एवं विष्ण इह इत्यादिषु गुणो न॥

**दी—। 'कानि सन्ति' 'कौ स्तः' इत्यत्र अस्तेरल्लोपस्य स्थानिवत्त्वेन यणावादेशौ प्राप्तौ "न पदान्त—" (५१) इति सूत्रेण पदान्तविधौ तन्निषेधात् न स्तः।**

In cases like कानि सन्ति, कौ स्तः &c., the elision of अ of the root अस is apparently to be deemed as अ itself; hence कानि सन्ति &c., have to be treated as कानि असन्ति and then य &c., have to be substituted for the इ in नि &c. Similarly in कौ स्तः &c., the substitution of आव् &c., seems necessary. But the fact is the rule "न पदान्त—" (51) prohibits स्थानिवद्भाव here, hence there is no substitution.

मित—। 'कानि सन्ति' 'कौ स्तः' इत्यादिषु अस्तेरकारलोपो न स्थानिवत्, तेन स्वरसन्धि र्न भवति इति व्याख्यार्थं "न पदान्त—" सूत्रे पदान्तोदाहरणे। तत्रैव द्रष्टव्यम्॥ इह स्वरसन्धेरभावः प्रस्तुतः। अतोऽस्य प्रसङ्गः॥

**६८। एकः पूर्वपरयोः॥६।१।८४॥**

**दी—। इत्यधिकृत्य—**

What follows is to be construed with the words एकः and पूर्वपरयोः added to it. Thus—

**६९। आद्गुणः॥६।१।८७॥**

**दी—। अवर्णात् अचि परे पूर्वपरयोरेको गुणादेशः स्यात्। संहितायाम्। उपेन्द्रः। रमेशः। गङ्गोदकम्।**

If अच् follows immediately after अ or आ a गुण is the single substitute for the two in the matter of संहिता। Thus उप इन्द्र has अ followed by इ which is an अच्। We have to substitute

a गुण for these two. But गुण is the common name for अ, ए, ओ। The most similar ( अन्तरतम ) has to be chosen. Referring to the place of origin, ओ having ओष्ठ for its स्थान and अ इ having कण्ठ and तालु there is no similarity whatever. Rejecting ओ we note that अ has कण्ठ for its स्थान and therefore there is some similarity with the group अ इ। But ए has both कण्ठ and तालु and is therefore the most similar. Substituting this we have उप् ए न्द्र *i e.*, उपेन्द्रः। Similarly रमा ईश रमेशः। गङ्गा उदक गङ्गोदकम् with the कण्ठोष्ठ्य letter ओ substituted for आ उ।

मित—। आत् अवर्णात्। अवर्णश्च आकारस्यापि ग्राहकः। परशब्दयोगे पञ्चमी। अवर्णात् परे अचि इत्यन्वयः। "संहितायाम्" (६।१।७२) इत्यधिकारः। "एकः पूर्वपरयोः" इत्यपि। 'अचि' इत्यनुवर्त्तते। 'आत् अचि पूर्वपरयोः एको गुणः संहितायाम्' इत्यन्वयः॥ उप इन्द्र इति स्थिते 'अ इ इति अवर्णादच्। अनयोः स्थाने गुणः स्यात्। "अदेङ् गुणः" इति अ, ए, ओ इति गुणाः। "स्थाने अन्तरतमः" इति अन्तरतमे ग्राह्ये स्थानसाम्यात् कण्ठतालुभव एकार एव कण्ठतालुभवस्य 'अ इ' इत्यस्य युक्त आदेशः। तेन उप इन्द्र। उप् एन्द्र। उपेन्द्रः। एवं रमा ईश रमेशः। गङ्गा उदक इत्यत्र 'आ उ' इति सङ्घातस्य कण्ठतालुस्थानसाम्यात् ओ इति गुण आदेशः॥ कृष्ण ऋद्धि इति स्थिते 'अ ऋ' इति सङ्घातस्य गुणादेशे कर्त्तव्ये एकारौकारयोः समता नास्ति इति स्पष्टम्। अस्ति च अकारस्य कण्ठस्थानसाम्यात् काचिदिव समता। स एव इह आदेशः। कृष्ण अ द्धि इति जाते—

७०। उरण् रपरः॥१।१।५१॥

दी—। 'ऋ' इति त्रिंशतः संज्ञा इत्युक्तम्। तत्स्थाने यः अण् स रपरः सन्नेव प्रवर्त्तते। तत्र आन्तरतम्यात् 'कृष्णर्द्धिः' इत्यत्र अर्, 'तवल्कारः' इत्यत्र अल्। "अचो रहाभ्याम्—" (५९) इति पक्षे द्वित्वम्।

As already remarked ऋ stands for 30 letters (14—1. 1. 69). If an अण् letter is to be substituted for ऋ, it will have to be taken with र affixed to it. र again is a प्रत्याहार standing for र and ल। From similarity र is affixed in case of ऋ। Thus कृष्ण ऋद्धि becomes

कृष्ण् अर् द्धि, because ॠ is an अण् letter, hence finally कृष्णर्द्धि। In case of ऌ we attach ल्। Thus तव ऌकारः gives तव् अल्कारः, i.e., तवल्कारः। In कृष्णर्द्धि we have द after र which again follows a vowel; hence by "अचो—" (59) the द has to be doubled optionally. The author however takes the old form of द which is ध of the root ऋध altered by "झलां—" (8. 4. 53). So he doubles ध। This is immaterial because the ultimate form will be the same. We have now कृष्णर् ध् धि without doubling and कृष्णर् ध्ध्धि with ध doubled, and look forward.

मि—। 'उः' इति ऋशब्दस्य षष्ठ्या एकवचनम्। 'र' इति 'हयवरट्' सूत्रस्य रेफादारभ्य लण्सूत्रस्थेन अवर्णेन प्रत्याहारः, तत् रग्रहणेन रलयोर्ग्रहणम्। रः परो यस्मात् स रपरः। एतेन इह कृष्ण् अ द्धि इति स्थिते रपरत्वे कृष्ण् अर् द्धि इति वा, कृष्ण् अल् द्धि इति वा सन्देहः। निर्णयमाह 'ऋ' इति त्रिंशतः इत्यादिना। ऋशब्देन ऋकारस्य अष्टादशभेदा ऌकारस्य च द्वादशभेदा गृह्यन्ते। तेन 'उः' इति ऋकार ऌकारस्य स्थानी। र इति रेफो लकारस्य आदेशाङ्गम्। 'ऋ' इत्यत्र रेफश्रवणात् 'ऌ' इति लकारश्रवणात् ऋकारे अर् ऌकारे अल् अन्तरतमः। ततः 'कृष्ण् ऋद्धि' इत्यत्र 'कृष्ण् अर् ऋद्धि' इति, 'तव ऌकारः' इति तु तव् अल् कारः' इति भवति। रूपञ्च कृष्णर्द्धिः इति तवल्कारः इति च॥ ऋद्धिरिति ऋध धातोः क्तिन्। ऋध् ति इति स्थिते "झषस्तथोः—" (२२८०—८।४।४०) इति ऋध् धि इति, ततो "झलां जश्—" (५२—८।४।५३) इति जश्त्वे ऋद्धि। जश्त्वे कृते द्वित्वादिभिर्यद्रूपं द्वित्वादिषु कृतेषु जश्त्वेन च तदेव। एवं फले भेदाभावात् अकृते जश्त्वे कृष्णर् ध् धि इति स्थिते "अचो—" (५९) इति द्वित्वविकल्पे 'कृष्णर्धधि' 'कृष्णर् ध् ध् धि' इति रूपद्वयम्। तत्राह—

७१। झरो झरि सवर्णे॥८।४।६५॥

दी—। हलः परस्य झरो लोपो वा स्यात् सवर्णे झरि। द्वित्वाभावे—लोपे सति एकधम्, असति लोपे, द्वित्वलोपयोर्वा, द्विधम्। सति द्वित्वे—लोपे चासति त्रिधम्। कृष्णर्धिः—कृष्णर्द्धिः—कृष्णर्द्द्धिः।

A झर् letter coming after a हल् is optionally elided if another

झर् of the same complexion ( सवर्ण ) follows. Now take the form above with ध not doubled—कृष्णार् ध् धि। Here ध् is a झर् coming after र् which is a हल् and ध follows. Hence ध् is optionally elided, with elision कृष्णार् धि with only one ध; without elision कृष्णार्ध्धि with two धs. The form with ध doubled is कृष्णार्ध्ध्धि। Eliding the first ध् we get two धs as before; without elision the ध occurs thrice. Hence there are only 3 different forms, viz., कृष्णार्धि, कृष्णार् ध् धि, कृष्णार् ध् ध् धि। In the second and third the rule "झलां जश् झशि" applies and gives कृष्णार्द्धि and कृष्णार्द्द् ध् धि। A second application of the same rule in the last form yields कृष्णार्द्द्धि। Hence finally कृष्णर्धिः, कृष्णर्द्धिः, कृष्णर्द्द्धिः।

मित—। "हलो यमां—" (८।४।६४) इत्यतो 'हलः' इति पञ्चम्यन्तमनुवर्त्तते 'लोपः' इति च। "झयो हो—" (८।४।६२) इत्यतो विकल्पार्थकम् 'अन्यतरस्याम्' इत्यपि। 'झरः' इति षष्ठी। 'हलः झरः लोपः अन्यतरस्याम् सवर्णे झरि इत्यन्वयः। अर्थश्च 'हलः परस्य' इत्यादि॥ एवमिह द्वित्वविकल्पो लोपविकल्पश्च इति चत्वारः पक्षाः। द्वित्वं न परं लोपः इत्येकः, न द्वित्वं न च लोपः इति द्वितीयः, द्वित्वञ्च लोपश्च इति तृतीयः, द्वित्वं न तु लोपः इति चतुर्थः। आद्ये कृष्णार्ध्धि इति रात् परस्य धस्य लोपे कृष्णार्धि इत्येकधं रूपम्। द्वितीये कृष्णार् ध्धि इति द्विधम्। तृतीये कृष्णार् ध्ध्धि इति धलोपे कृष्णार् ध्धि इति तदेव द्विधं रूपम्। पुनर्लोपे कृष्णार् धि इति भूयोऽप्येकधं रूपम्। तदेवं फलाभावान्मास्तु तृतीयः पक्षः। चतुर्थे कृष्णार् ध् ध्धि इति त्रिधं रूपम्। द्वितीय चतुर्थयोर्जश्त्वे कृष्णार् द् धि, कृष्णार् द् द् धि इति। इत्यञ्च त्रीणि रूपाणि कृष्णर्धिः—कृष्णर्द्धिः कृष्णर्द्द्धिः इति। प्रथमं जश्त्वे पश्चात् द्वित्वलोपयोः कृतयोरपि तान्येव रूपाणि॥

दी—। "यण इति पञ्चमी मय इति षष्ठी" इति पक्षे ककारस्य द्वित्वम्। लस्य तु "अनचि च" (४८) इति। तेन 'तवल्कारः' इत्यत्र रूपचतुष्टयम्।

द्वित्वं लस्यैव कस्यैव नोभयोरुभयोरपि।
तवल्कारादिषु बुधैर्बोध्यं रूपचतुष्टयम्॥

In तवल्कारः the ल is a यण् and the क a मय्। Hence by the varttika "यणो मयो—" (54), supposing यणः to have the fifth case and मयः in the sixth, we have the option to double the क। ल itself may be doubled optionally by "अनचि च" (48). Hence तवल्कारः has four different forms. For, ल alone may be doubled or both. Thus those who know, see four forms in cases like तवल्कारः।

मित—। 'तवल्कारः' इत्यत्र लकारोऽयं यण्, ककारश्च मय्। तत् "यणो मयो द्वे वाच्ये" (५४ वा०) इत्यस्य यणः परो यो मय् तस्य द्वित्वं वा इति व्याख्याने ककारस्य द्वित्वविकल्पः। लकारस्यापि "अनचि च" (४८) इति। तेन द्वित्वं लस्यैव इति पक्षे तवल्ल्कार इति रूपम्। कस्यैव द्वित्वे तवल्क्कार इति द्वितीयम्। उभयोरपि लकारककारयोः स्वरूपे एव स्थितिः न तु द्वित्वमिति पक्षे तवल्कार इति तृतीयं रूपम्। उभयोरपि द्वित्वमिति तवल्ल्क्कार इति रूपं चतुर्थम्। तत्र प्रथमे ककारो न यम् इति "हलो यमां—" इति न प्रवर्त्तते। नापि लकारो झर् न वा "ककारस्तस्य सवर्ण इति झरो झरि—" इत्यस्यापि प्रसङ्गो नास्ति। तेन लकारस्य न लोपः॥ द्वितीये "झरोझरि—इत्यस्ति ककारलोपस्यावसरः, फलं तु एकककारकं तृतीयमेव रूपम्, तन्निष्प्रयोजनो लोपो न प्रवर्त्तते। चतुर्थेऽपि लोपे फलाभावः। तेन चत्वार्य्येव रूपाणि। अतएवाह 'बोध्यं रूपचतुष्टयम्' इति॥

## ७२। वृद्धिरेचि ॥६।१।८८॥

दी—। आत् एचि परे वृद्धिरेकादेशः स्यात्। गुणापवादः। कृष्णैकत्वम्। गङ्गौघः। देवैश्वर्य्यम्। कृष्णौत्कण्ठ्यम्।

If one of the एच् letters follows अ or आ a वृद्धि shall be the single substitute for the two. This over-rules the गुण previously enjoined. In कृष्ण एकत्व we have proximity ( सन्निकर्ष ) of अ and ए। These have to be replaced by a वृद्धि। By वृद्धि we mean आ, ऐ, औ। अ and ए together have throat and palate for their place of origin ; such is ऐ। Hence ऐ is the substitute here.

Thus कृष्ण एकत्व = कृष्ण् अ एकत्व = कृष्ण् ऐ कत्व = कृष्णैकत्वम्। Similarly गङ्गा ओघ = गङ्ग् आ ओघ = गङ्ग् औ घ because औ has the same place of origin as आ and ओ = गङ्गौघः। देव ऐश्वर्य = देव् अ ऐश्वर्य = देव् ऐ श्वर्य = देवैश्वर्यम्। कृष्ण औत्कण्ठ्य = कृष्ण् अ औत्कण्ठ्य = कृष्णौत्कण्ठ्यम्।

मित—। 'आत्' इत्यस्ति। 'एकः पूर्वपरयोः' इति च। आत् एचि पूर्वपरयोः एको वृद्धिः इत्यन्वयः। आदिति गम्यमान परशब्दापेक्षया पञ्चमी, तदाह 'आदेचि परे' इति। 'एकादेशः' पूर्वपरयोरिति शेषः॥ "आद्गुणः" इति अचि सामान्यतो गुण आदिष्ट। इह तु एजंशे गुणं प्रत्यादिश्य वृद्धिर्विधीयते। तदाह 'गुणापवादः' इति। एतेन आत् अकि गुणः एचि वृद्धिरिति व्यवस्था॥ कृष्णस्य एकत्वम् इति समासे 'कृष्ण एकत्व' इति स्थिते 'अच' इत्येतयोः सन्निकर्षे तयोः स्थाने वृद्धिर्विधेया। वृद्धिश्च आ ऐ औ इति। तत्र कण्ठतालुस्थानसाम्यात् ऐकार इह अन्तरतम आदेशः। तेन कृष्णैकत्वमिति॥ गङ्गाया ओघ इति गङ्गा ओघ इति स्थिते आ ओ इत्येतयोः कण्ठोष्ठस्थानसाम्यात् औकार आदेशः॥ देवानामैश्वर्यमिति देव ऐश्वर्य इति स्थिते ऐकारे एकादेशे देवैश्वर्यम्॥ कृष्णस्य औत्कण्ठ्यम् इत्यत्र औकारे कृष्णौत्कण्ठ्यम्॥

## ७३। एत्येधत्यूठ्सु॥६।१।८९॥

**दी—। अवर्णात् एजाद्योरेत्येधत्योः ऊठि च परे वृद्धिरेकादेशः स्यात्। पररूपगुणापवादः। उपैति। उपैधते। प्रष्ठौहः। 'एजाद्योः' किम्? उपेतः। मा भवान् प्रेदिधत्।**

When एकार of the root इण् or एध् or when ऊठ् follows अ or आ, a वृद्धि is the single substitute of both. This over-rules पररूप and गुण। Thus उप एति was expected to give उपेति by the rule "एङि पररूपम्" but this rule bars the पररूप and substitute वृद्धि giving उपैति। Similarly पररूप is barred in उपएधते and वृद्धि gives उपैधते। The word प्रष्ठवाह्, meaning 'oxen' in the second case plural becomes प्रष्ठवाह् अस्। वा becoming ऊ we get प्रष्ठ ऊह् अः। Now प्रष्ठोहः is expected with गुण by "आद्गुणः" but this rule gives वृद्धि yielding प्रष्ठौहः। Why say 'एकार of the root &c.'? Witness उपेत with गुण from उप इत where इत comes from इण् with क्त

attached, but as it begins with इ not ए we have no वृद्धि। प्रेदिधत् in मा भवान् &c., is reached in the following stages— प्र एध् णिच् तिप् ( लुङ् )—प्र एधि त्—प्र एधि चङ् त्—प्र इधि अत्—प्र इ धि धि अत्—प्र इदिध् अत्—प्र इदिधत्—प्रेदिधत्। In the last stage we have गुण not वृद्धि because the root no longer begins with ए।

मित—। 'आत्' इत्यनुवर्त्तते, 'वृद्धिः' 'एचि' इति च। 'एकः पूर्वपरयोः' इति चास्ति। तत् 'आत् एत्येधत्यूठ्सु एचि पूर्वपरयोः एको वृद्धिः' इत्यन्वयः। अर्थश्च— 'आत्' अवर्णात् परम् 'एत्येधत्यूठ्सु' स्थितो य एच् तस्मिन् सति 'पूर्वपरयोरेको वृद्धिः' आदेशः स्यात्—इति। इह 'एति' इति इण् गतौ इति धातोस्तिपा निर्देशः, 'एधति' इति च एध वृद्धौ इत्यस्य। अनयोरेव एच् सम्भवति न ऊठि, तथापि यदूठ् गृह्यते तेन ज्ञाप्यते ऊठि परे असत्यपि एचि वृद्धिः स्यादिति। किञ्च आदिति पञ्चम्या एचि इति सप्तम्या च अव्यवहितता। सा च एचि आदौ सत्येव भवति। तदेतत् सर्वमभिप्रेत्य आह एजाद्योरित्येधत्योरूठि च परे' इति॥ उप एति उप एधते इत्यत्र "एङि-पररूपम्" इति पररूपे प्राप्ते वृद्धिर्विधीयते। प्रष्ठ ऊह इत्यत्र "आद्गुणः" इति गुणे प्राप्ते। तदाह 'पररूपगुणापवादः' इति॥ प्रष्ठं यानमुखम् अग्रगामिनं पुरुषमिति वा वहतीति ण्वि प्रत्यये प्रष्ठवाह् इति प्रातिपदिकम्। तस्य शसि प्रष्ठ वाह् शस् इति स्थिते "वाह ऊठ्" इति सम्प्रसारणसंज्ञके ऊठि प्रष्ठ ऊ आ ह् अः इति। "सम्प्रसारणाच्च" इति पूर्वरूपे प्रष्ठ ऊह् अः। अनेन वृद्धौ प्रष्ठौहः॥ इण्धातोः क्तप्रत्यये इतः। प्र इतः इति स्थिते एकारादित्वाभावात् न वृद्धिः—प्रेतः॥ एधयिष्यति वर्द्धयिष्यति इत्यर्थे माङ्योगे भविष्यति लुङि आडागमप्रतिषेधे प्र एध णिच् तिप् इति स्थिते चङि प्र एधि चङ् तिप् इति। "णौ चङि—" इति उपधाह्रस्वे, प्र इधि अ त् इति। द्विर्वचनादिषु प्र इदिधि अत् इति। णिलोपे प्र इदिध् अत् इति। इहापि एकारादित्वाभावात् न वृद्धिः—प्रेदिधत्॥

दी—। पुरस्तादपवादन्यायेन इयं वृद्धिः "एङि पररूपम्" ( ७८ ) इत्यस्यैव वाधिका, न तु "ओमाङोश्च" ( ८० ) इत्यस्य। तेन 'अवैहि' इति वृद्धिरसाधुरेव।

Exceptions preceding the general rules bar only the rule

that is first met and not those that come later on. Hence this वृद्धि bars "एङि—" (78) only and not "ओम्—" (80) also. Consequently अव आ इहि—अव एहि—अवैहि by वृद्धि is wrong, the correct form being अवेहि by पररूप in accordance with "ओमाङोश्च" (80).

मित—। अवाङ्पूर्वस्य इणधातोर्लोटि मध्यमैकवचने अव आ इहि इति स्थिते गुणे अव एहि इति। एकारोऽयं गुण एकादेशः "अन्तादिवच्च" (७५) इति इणधातोरादिवद्गृह्यते। तेन एजादित्वात् अनेन सूत्रेण 'अवैहि' इति वृद्धिः प्राप्नोति। किञ्च पूर्वस्य अन्तवद्ग्रहणात् आङ्वदप्ययम्। ततश्च "ओमाङोश्च" इति पररूपे 'अवेहि' इत्यादि प्राप्तम्। किमत्र युगपत्प्राप्तौ न्याय्यम् इति प्रश्ने उत्तरमाह 'पुरस्तात्' इत्यादिना। अयमर्थः—इह शास्त्रे क्वचिदुत्सर्गान्निर्दिश्य अपवादा निर्दिश्यन्ते, क्वचिद्वा अपवादनिर्देशादुत्तरमुत्सर्गनिर्देशः। आद्ये सर्व एव उत्सर्गा अपवादैर्बाध्यन्ते, द्वितीये तु यः प्रथमं निर्दिष्ट उत्सर्गस्तस्यैव बाधो नान्येषाम्। उक्तश्च न्यायः "पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्" इति। प्रकृते च "एत्येध—" इति "एङि पररूपम्" इत्यस्यापवादः "ओमाङोश्च" इत्यस्यापि आशङ्क्यते। किञ्च "एङि—" इति प्रथमं प्राप्तम् तदुत्तरम् "ओमाङोश्च" इति। तत् "एङि—" इत्येव बाध्यते न "ओमाङोश्च" इति। अत आह 'अवैहि' इति वृद्धिरसाधुः। "ओमाङोश्च" इति पररूपे 'अवेहि' इत्येव युक्तम् ॥

**दी—। "अक्षादूहिन्यामुपसंख्यानम्" (वार्त्तिक)। अक्षौहिणी सेना।**

It has to be noted that वृद्धि is the single substitute when ऊहिनी follows अक्ष। Thus अक्ष ऊहिनी gives अक्षौहिणी not अक्षोहिणी।

मित—। अक्षशब्दात् परम् ऊहिनी शब्दे सति पूर्वपरयोरकारोकारयोः वृद्धिरेकादेशः स्यादित्यस्य उपसंख्यानं गणना कर्त्तव्या। अक्षा रथावयवविशेषाः। ऊहो वितर्कः। सः अस्ति अस्याः सम्बन्धे इति ऊहिनी। अक्षाणामूहिनी अक्षौहिणी। रथावयवसम्बन्धि वितर्कविशिष्टा इति हि योगार्थः। वस्तुतस्तु सेनासंख्याविशेषस्य संज्ञेयम्। तेन "पूर्वपदात् संज्ञायामगः" इति णत्वम्। गुणापवादो वृद्धिः ॥

दी—। "स्वादीरेरिणोः" (वार्त्तिक)। स्वैरः। स्वेन ईरितुं शीलमस्येति स्वैरी—स्वैरिणी।

वृद्धि is the single substitute when ईर or ईरिन् follows स्व। Thus स्व ईर gives स्वैर। Also स्व ईरिन् gives स्वैरिन् (with the femenine स्वैरिणी) meaning one moving about of his own will.

मित—। स्वशब्दात् परम् ईरशब्दे ईरिन्-शब्दे च सति पूर्वपरयोरकारेकारयो र्वृद्धिरेकादेशः स्यात्॥ ईरणमीरो गतिः। भावे घञ्। स्व ईरः स्वैर—आत्मप्रेरणा। यद्वा स्व ईरः अस्मिन् स्वैर आत्मप्रेरितः। इह आद्‌गुणापवादो वृद्धिः॥ स्वेन इत्यादि "सुप्यजातौ—" इति णिनिरर्थः। इह स्व ईरिन् इति स्थिते प्राग्वद् वृद्धिः। स्वैरिणी इति स्वैरिन्-शब्दात् स्त्रियां ङीप्। ईरिन्-शब्दात् ङीपि तु स्वैरीणीति स्यात्॥

दी—। "प्रादूहोढोढ्येषैष्येषु" (वार्त्तिक)। प्रौहः। प्रौढः।

A single वृद्धि substitute comes in for the contiguous vowels when ऊह, ऊढ, ऊढि, एष or एष्य follow प्र। Thus प्र ऊह yields प्रौह a happy guess—by वृद्धि, not प्रोह by गुण। Similarly प्र ऊढ gives प्रौढ well advanced.

मित—। 'प्र' इत्युपसर्गात् परम् ऊह, ऊढ, ऊढि, एष, एष्य इत्येतेषामन्यतमे सति सन्निकृष्टयोः पूर्वपरयोरचोर्वृद्धिरेकादेशः स्यात्। पररूपगुणापवादः॥ प्रपूर्वादूहतेर्घञि प्रकृष्ट ऊह इति वा समासे प्र ऊह इति स्थिते गुणापवादो वृद्धिः—प्रौहः। प्रपूर्वाद्वहतेः क्त प्रत्यये प्रकर्षेण ऊढ इति वा समासे प्र ऊढ इति स्थिते वृद्धिः॥

दी—। अर्थवद्ग्रहणे नानर्थकस्य ग्रहणं "व्रश्च—" (२९४) इति सूत्रे राजेः पृथक्, भ्राजिग्रहणात् ज्ञापकात्। तेन ऊढग्रहणेन क्तान्तमेव गृह्यते; न तु क्तवत्वन्तस्य एकदेशः। प्रोढवान्।

The rule "व्रश्च—" (294) directs ष to be substituted for the final of राज् and भ्राज्। But as राज् is seen in भ्राज् it seems राज् alone would meet the case of भ्राज् also and the rule could be shortened by omitting भ्राज् from it. Yet Panini mentions भ्राज् separately. Why? The reason is the independent राज् and

राज् as a portion of भ्राज् are not the same. The first has a meaning attached to it ; in the case of the second the meaning goes with the whole भ्राज् and not with the part राज् only. Hence to justify Panini we suppose that grammatical rules when mentioning words that are both significant and non-significant are to be regarded as relating to the significant forms only. Now ऊढ़ with क्त is an independent word with a meaning, but a ऊढ़ as part of ऊढ़वान् with क्तवतु is meaningless. Hence ऊढ़ is both significant and non-significant. The Varttika refers to the significant ऊढ़ only (with क्त). Consequently प्र ऊढ़वान् has no वृद्धि and we get प्रोढ़वान् with गुण, as expected from "आद्गुणः"।

मित—। ननु ऊढ़वान् इत्यत्रापि ऊढ़ इत्यंशो दृश्यते। तत् प्र ऊढ़वान् प्रौढ़वानित्यप्यस्तु। न इत्याह 'अर्थवद्ग्रहणे' इत्यादिना। यत्र कश्चित् शब्दः अर्थवान् अनर्थकश्च प्राप्तः तत्र अर्थवानेव गृह्यते। अनर्थको निवर्त्तते। 'अर्थवतो' रूपस्य 'ग्रहणे' सम्भवे 'अनर्थकस्य' शब्दरूपस्य 'ग्रहणं न' भवति। मतञ्चैतत् सूत्रकारस्य। तथाहि स "व्रश्च—" इति सूत्रे राजधातोर्भ्राजधातोश्च अन्त्यस्य षकारं शास्ति। भ्राजेश्च शेषांशे राजिः श्रूयते। तत् राजि ग्रहणेन यद्युभयोरपि ग्रहणं स्यात् तर्हि पृथक् भ्राजि-ग्रहणं न कुर्यात्। स तु मन्यते राजिरयमर्थवान् भ्राजिश्च। परं भ्राजेरेकादेशो यो राजिस्तस्य न कश्चिदर्थ उपदिष्टः। एको हि राजिरर्थवान् अपरोऽनर्थकः। नियमश्चास्ति अर्थवदनर्थकयोरर्थवानेव ग्राह्यः। अतएव पृथक्त्वेन भ्राजिरुपदिश्यते। अयञ्च नियमः "अर्थवद्ग्रहणे नानर्थकस्य" इति परिभाषायामुपनिबद्धः॥ एवं सति 'ऊढ़' इति वहधातोःक्तप्रत्यये श्रूयते क्तवतुप्रत्ययेऽपि एकदेशे। क्तान्तः समुदायः अर्थवान् क्तवत्वन्तस्य एकदेशस्तु अनर्थकः। अत्र ऊढ़ इति क्तान्तमेव ग्राह्यं न क्तवत्वन्तस्यैकदेशः। प्र ऊढ़वानिति स्थिते गुणेन प्रोढ़वानित्येव न च वृद्ध्या प्रौढ़वानिति॥

दी—। प्रौढ़िः। इष् इच्छायां तुदादिः, इष् गतौ दिवादिः, इष् आभीक्ष्ण्ये क्र्यादिः। एषां घञि ण्यति च 'एषः' 'एष्यः' इति रूपे। तत्र

पररूपे प्राप्ते अनेन वृद्धिः—'प्रैषः' प्रैष्यः'। यस्तु ईष् उञ्छे, यश्च ईष् गतिहिंसादर्शनेषु, तयोर्दीर्घोपधत्वात् 'ईषः' 'ईष्यः'। तत्र आद्गुणे, 'प्रेषः' 'प्रेष्यः'।

Similarly वह with क्तिन् gives ऊढि। प्र ऊढि takes वृद्धि by this rule instead of गुण and the result is प्रौढि experience, wisdom &c., 'इष् to wish' is of the तुदादि class, 'इष् to go' is दिवादि and 'इष् to repeat' is क्र्यादि। These give एष with घञ् and एष्य with ण्यत्। प्र एष and प्र एष्य invite पररूप but this rule bars it and enjoins वृद्धि with the forms प्रैष and प्रैष्य। But प्रेष and प्रेष्य are not altogether inadmissible. ईष with the long vowel appears twice in the भ्वादि list once meaning 'to glean' and again 'to go' 'to molest' 'to see' &c. This with घञ् and ण्यत् gives ईष and ईष्य without गुण because the pen-ultimate is long *not* लघु। Taken with प्र these require गुण by "आद्गुणः" yielding प्रेष and प्रेष्य।

मित—। वहेः क्तिन्प्रत्यये ऊढिः। प्रकृष्टा ऊढिरिति प्रपूर्वाद्वहेः क्तिनि वा प्र ऊढि इति स्थिते आद्गुणापवादो वृद्धिः—प्रौढिः प्रवीणता॥ 'एष' इति इषेर्घञि रूपम्, 'एष्य' इति ण्यति। 'प्र एष इति स्थिते "एङि पररूपम्" इति पररूपे प्राप्ते अनेन वृद्धिः—प्रैषः। एवं प्रैष्य इत्यपि॥ 'प्रेषः' 'प्रेष्यः' इति तु धातुभेदात्। ईष् इति भौवादिकस्य दीर्घस्वरस्य लघुत्वाभावात् गुणो नास्ति, ईष इति च रूपम्। एवं ण्यति ईष्य इति। प्र ईष इति स्थिते आद्गुणे प्रेष इति। एवं प्रेष्य इति च॥ एष इति अनव्ययेन घञन्तेन साहचर्यात् एष्य इत्यप्यनव्ययमेव। तेन प्र इष णिच् ल्यप् इत्यत्र न वृद्धिः, गुणेन च प्रेष्य इति रूपम्॥

दी—। "ऋते च तृतीया समासे" (वार्त्तिक)। सुखेन ऋतः सुखार्त्तः। 'तृतीया' इति किम्? परमर्त्तः।

वृद्धि is the single substitute of the two contiguous vowels. when ऋत immediately follows अ or आ in a तृतीयातत्पुरुष। Thus सुखेन ऋतः compounded gives सुख ऋत in which in place of अ and ऋ comes the वृद्धि substitute आ and then adding र् by "उरण्—"

(70—1. 1. 51) we have सुख आर् त, *i., e.,* सुखार्त्तः overcome with joy, reached by joy, &c. Why say तृतीया? Witness परमर्तः with गुण the समास being in the sense परमश्चासौ ऋतश्च or परमं यथा तथा ऋतः which gives परम ऋत yielding परम् अर् त by गुण and finally परमर्त्तः—very much overcome, fully reached &c.

मित—। 'आत्' इत्यस्ति 'वृद्धिः' इति च। आत् ऋते च तृतीया-समासे पूर्वपरयोर्वृद्धिरेकादेशः स्यात् इत्यर्थः। ऋ गतौ इत्यस्य क्तप्रत्यये ऋतो गतः प्राप्त इत्यर्थः। सुखेन ऋत इति वाक्ये "कर्त्तृकरणे कृता बहुलम्" इति समासे सुख ऋत इति स्थिते अकार ऋकारयोर्गुणः प्राप्तः। तदपवादो वृद्धिराकारो विधीयते। रपरत्वे सुख् आर् त इति सुखार्तः प्राप्तानन्द इत्यर्थः॥ तृतीयासमासे एवैतत्। अन्यच्च परमं यथा तथा ऋत इति विग्रहे सुप्सुपेति समासे परम ऋत इति स्थिते गुणेन परमर्तः॥

**दी—। "प्रवत्सतरकम्बलवसनार्णदशानामृणे" (वार्त्तिक)। 'प्रार्णम्' 'वत्सतरार्णम्' इत्यादि। ऋणस्य अपनयनाय यदन्यदृणं क्रियते तत् 'ऋणार्णम्'। 'दशार्णः' देशः। नदी च 'दशार्णा'। ऋणशब्दो दुर्गभूमौ जले च।**

वृद्धि is the single substitute for the two contiguous vowel, when ऋण follows प्र, वत्सतर, कम्बल, वसन, ऋण, दश। Thus प्र ऋण प्रार्ण heavy debt, वत्सतर ऋण वत्सतरार्ण loan of a heifer, कम्बलार्ण loan of a blanket, वसनार्ण loan of a garment. 'ऋण ऋण' ऋणार्ण a debt to clear another debt. दशार्ण is a country; a river also is called दशार्णा। ऋण means both a fort and water.

मित—। दशभ्य इति वक्तव्ये दशानामिति सौत्री षष्ठी। प्रादिभ्यः परम् ऋणशब्दे सति पूर्वपरयोरकारऋकारयोर्वृद्धिरेकादेशः स्यादित्यर्थः। प्रकृष्टम् ऋणं प्रार्णम्। वत्सतररूपम् ऋणं वत्सतरार्णम्। एवं कम्बलार्णम् वसनार्णम्॥ ऋणाय ऋणनिर्यातनाय ऋणम् ऋणार्णम्॥ दश ऋणानि दुर्गाणि अस्मिन् इति दशार्णो देशः। दश ऋणानि जलानि जलप्रपाता अस्यामिति दशार्णा नदी॥ यत्तु "सप्त व्याधा दशार्णेषु" "सम्पत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णाः" इत्यादिषु दशार्णशब्दस्य बहुत्वं दृश्यते तत् व्युत्पत्त्यन्तरेण। तथा च दश ऋणानि दुर्गाणि एषामिति दशार्णाः

चत्रियविशेषाः। दशार्णानां निवासो जनपदः दशार्णाः। "जनपदे लुप्" इति अण् लोपः। "लुपियुक्तवद्व्यक्तिवचने" इति बहुवचनम् ॥

७४। उपसर्गादृति धातौ ॥ ६।१।९१॥

दी—। अवर्णान्तादुपसर्गात् ऋकारादौ धातौ परे वृद्धिरेकादेशः स्यात्। उपार्च्छति। प्रार्च्छति।

वृद्धि is the single substitute for the two contiguous vowels, when a root with ऋ leading in it follows an उपसर्ग that ends with अ or आ। Thus उप ऋच्छति has वृद्धि, *i. e.*, आ with र added, yielding उप् आर् च्छति—उपार्च्छति। Similarly प्रार्च्छति।

मित—। 'आत्' इत्यस्ति। गम्यमान 'पर' शब्दयोगे पञ्चमी। एतेन 'आत् परे ऋति' इति लभ्यते। आत् परे ऋति किं भवति? उच्यते—"वृद्धिः" इत्यस्ति 'एकः पूर्वपरयोः' इति च। तदयमन्वयः—आत् परे ऋति पूर्वपरयोः वृद्धिः एकादेशः स्यात्। पूर्वपरयोः अकारऋकारयोरिति यावत्। एकादेशः 'आर्' इति रपरः। किम्भूतात् आत् किम्भूते ऋति एतत्? 'उपसर्गात्' आत् 'धातौ' ऋति। अनयोश्च पूर्वपरतायां सत्याम् अवर्णान्त उपसर्गः ऋकारादिर्धातुर्लभ्यते। तमाह—'अवर्णान्तादुपसर्गात् ऋकारादौ धातौ परे वृद्धिरेकादेशः' इति ॥ ननु अत्र योऽयमेकादेश आर् इति स उप इत्यस्य अन्तावयवः। तथा च सूत्रम्—

७५। अन्तादिवच्च ॥ ६।१।८५ ॥

दी—। योऽयमेकादेशः स पूर्वस्य अन्तवत् परस्य आदिवत् स्यात्। इति रेफस्य पदान्तत्वे—

This single substitute is to be treated as the final of the preceding word and also as the initial of the succeeding. This making the र् of the example final in a पद—

मित—। एकादेश इह 'अ' इति पूर्वस्य 'ऋ' इति परस्य च स्थाने 'आर्' इति एक आदेशः। वस्तुतस्तु "वृद्धिरादैच्" इत्येतावता 'आ' इत्येवेह आदेशः, 'र्' इति तु आगमः "उरण् रपरः" इति। तदिह उदाहरणे 'एकादेश' इति आगमसमेत

आदेशो मन्तव्यः ॥ 'पूर्वस्य अन्तवत् परस्य आदिवत्' इत्यत्र पूर्वं इति तु न स्थानिनो-र्वर्णयोः पूर्वो वर्णः, किन्तु यस्य वर्णसङ्घातस्य स वर्णश्चरमावयवः स एव पूर्वः। उदाहरणे 'उप' इति पूर्वः। एवम् पर इति न हि स्थानिनोः परो वर्णः किन्तु स यस्य सङ्घातस्य आद्यवयवः स एव परः। उदाहरणे ऋच्छति' इति परः ॥ 'अन्तवत्' 'आदिवत्' इति अन्तेन तुल्यम् आदिना तुल्यम् इत्यर्थः। तत्तुल्यस्तु स इव न हि स एव। तेनायमेकादेशः तद्रूपः, स्थानिरूप इत्यर्थः, न भवति। यो यो धर्मः पूर्वान्तस्य यश्च यश्च परादेः स स भवति एकादेशस्य, परं यत् यत् कार्य्यं स्थानिनो रूपमाश्रित्य प्रवर्त्तते तत् तत् तस्य न भवति। उदाहरणे 'आर्' इति पूर्वस्य उपशब्दस्य अन्तवत् ग्राह्यः। उप इति च पदम्। तेन 'आर्' इति पदान्तः। ततश्च रेफ इह पदान्त इति फलितम् ॥ भवतु पदान्त एव रेफः, किं तेन ? 'रेफस्य पदान्तत्वे' सति—

### ७६। खरवसानयोर्विसर्जनीयः ॥ ८।३।१५॥

**दी—। खरि अवसाने च परे रेफस्य विसर्जनीयः स्यात् पदान्ते, इति विसर्गे प्राप्ते—**

If र् is पदान्त then विसर्ग replaces it when a खर् or termination (cessation) follows. This gives an occasion for a विसर्ग to come in place of the र् of our example. But—

**दी—। अन्तवद्भावेन पदान्तरेफस्य न विसर्गः "उभयथर्क्षु" (३६७०—८।३।८), "कर्त्तरि चर्षिदेवतयोः" (३१६७—३।२।१८६) इत्यादिनिर्देशात्।**

र् obtained as final in a पद by अन्तवद्भाव—does not change into a विसर्ग as is obvious from Panini's own practice in rules like "उभयथा—", "कर्त्तरि चर्षि—" etc.

मित—। उदाहरणे उपार् ऋच्छति इति स्थिते रेफात् परं खर् अस्ति चकारः। तेन रेफस्य स्थाने विसर्ग आयाति, ततश्च उपाःऋच्छति इत्यनिष्टं रूपमापद्यते। वस्तुतस्तु सत्यपि एतावति स्वयं पाणिनिरेव ईदृशे विषये विसर्गं न करोति। तथा च सूत्रं "उभयथर्क्षु"। 'उभयथा ऋक्षु' इति स्थिते एकादेशे उभयथर् क्षु इति। ततः सूत्रकारो विसर्गमकृत्वा एव प्राह "उभयथर्क्षु" इति। किञ्च "कर्त्तरि चर्षि—" इति

सूत्रे 'च ऋषि' इति स्थिते एकादेशे चर् षि इति। इहापि नैव क्वतौ विसर्गः। एवम् आचार्य्यप्रवृत्तिर्ज्ञापयति 'अन्तवद्भावेन' लब्धो यः 'पदान्तरेफः' तस्य स्थाने 'विसर्गो न' भवतीति। तेन सुस्थितं उपार्च्छतीति प्रार्च्छतीति च ॥ ननु प्रकृतिभावेन रूपान्तरमप्यस्तु उप ऋच्छतीति प्र ऋच्छतीति च। तत्राह—

**दी—। उपसर्गेणैव धातोराक्षेपे सिद्धे 'धातौ' इति योगविभागेन पुनर्वृद्धिविधानार्थम्। तेन "ऋत्यकः" (६२—६।१।१२८) इति पाक्षिकोऽपि प्रकृतिभावोऽत्र न भवति।**

उपसर्ग itself brings in the corresponding धातु, hence धातौ in the rule is to disjoin it and enjoin वृद्धि again. Thus the optional प्रकृतिभाव also by "ऋत्यकः" is barred.

मित—। सूत्रेऽस्मिन् 'धातौ' इति व्यर्थम्। असति धातौ उपसर्गता नास्ति। तत् "उपसर्गात् ऋति" इत्येतावतैव धातुस्थोऽयम् ऋकार इति गम्यते, व्यर्था तदर्थं स्फुटोक्तिः 'धातौ' इति। मा भूदेवम्। 'धातौ' इत्यस्य प्रयोजनान्तरमस्ति। इह योगो विभज्यताम्। "उपसर्गादृति" इत्यस्तु योग एकः "धातौ" इति च द्वितीयः। आद्येन यथा प्रदर्शितम् उपार्च्छति इति लब्धं प्राप्तञ्च पाक्षिकम् उपऋच्छतीति। परं यस्तु द्वितीयो योगः "धातौ" इति तत्र 'वृद्धिः' 'उपसर्गादृति' इत्यनुवर्त्तनात् पूर्वसूत्रे विहितापि 'वृद्धिः पुनर्विधीयते'। तत्तु वृद्धिरेव प्रकृतिभावो न भवतेति ज्ञापनार्थम्। तेन उपार्च्छति इत्येकमेव रूपम् ॥

## ७७। वा सुप्यापिशलेः ॥ ६।१।९२॥

**दी—। अवर्णान्तादुपसर्गात् ऋकारादौ सुब्धातौ परे वृद्धिर्वा स्यात्। आपिशलिग्रहणं पूजार्थम्। प्रार्षभीयति—प्रर्षभीयति। सावर्ण्यात् लृवर्णस्य ग्रहणम्। प्राल्कारीयति—प्रल्कारीयति। तपरत्वात् दीर्घे न। उपऋकारीयति—उपर्कारीयति ॥**

The single वृद्धि substitute is optional when a nominal root with short ऋ leading in it follows an उपसर्ग ending in अ or आ। आपिशलि is mentioned as a mark of respect. Thus प्र ऋषभीयति

प्रार्षभीयति with वृद्धि and प्रर्षभीयति without it. ऌ is सवर्ण of ऋ, hence ऋ includes ऌ। Thus प्र ऌकारीयति प्राल्कारीयति or प्रल्कारीयति ॥ The rule has ऋत् not ऋ ; hence by "तपरस्तत्कालस्य" (15—1.1.70) the वृद्धि of rules 74 and 77 is not available if ॠ follows. We shall then have गुण (69—6.1.87) and the optional प्रकृतिभाव (92—6. 1. 128). Thus उप ॠकारीयति ( प्रकृतिभाव )—उपर्कारीयति ( गुण )।

मित—। 'सुपि' सुबन्ते। उपसर्गात् ऋति 'धातौ' इत्यनुवर्त्तते। 'सुपि' इति धातौ इत्यस्य विशेषणम्। सुबन्ते धातौ, सुबन्तप्रकृतिके धातौ सनाद्यन्तधातौ इत्यर्थः। 'सुबधातौ' नामधातौ ॥ 'वा इत्यनेनैव विकल्पे सिद्धे 'आपिशलिग्रहणं पूजार्थं' पूर्वाचार्य्यपूजार्थम् ॥ आत्मनः ऋषभं मह्योचम् इच्छति इति ऋषभ+क्यच् +लट्ति ऋषभीयति। प्र ऋषभी यति इति स्थिते वृद्धिविकल्पः। प्रकृतिभावस्तु न, प्राग्वत् "धातौ" इति योगविभागात् बाध्यते हि सः॥ 'त परत्वात्' सूत्रे ऋति इति तकारग्रहणात् 'दीर्घे' ॠकारे एतत् 'न' भवति। तत्र तु यथाप्राप्तं गुणः प्रकृतिभावश्च ॥

## ७८। एङि पररूपम् ॥ ६।१।९४ ॥

दी—। आदुपसर्गात् एङादौ धातौ परे पररूपमेकादेशः स्यात्। प्रेजते। उपोषति।

If a धातु with एङ् leading in it follows an उपसर्ग ending in अ or आ the form of the latter is the single substitute for the two vowels. Thus प्र एजते=प्र अ ए जते=प्र ए जते=प्रेजते। Similarly उप ओषति उपोषति।

मित—। 'उपसर्गात्' इत्यनुवर्त्तते 'आत्' इति च। उपसर्गेण धातोराक्षेपः। तदाह 'एङादौ धातौ'। 'परस्य' पौर्वापर्य्येण अवस्थितयोः अचोः परस्य। एङः इति फलितम्"। अकारात् परे एङि एङ् एकादेश इत्यर्थः॥ प्र एजते प्रेजते प्रदीप्यते। उप ओषति उपोषति दहति ॥

दी—। इह 'वा सुपि' इत्यनुवर्त्त्य वाक्यभेदेन व्याख्येयम्। तेन एङादौ सुब्धातौ वा। उपेङ्कीयति—उपेङ्कीयति। प्रोघीयति—प्रौघीयति।

Here we have now to bring in 'वा सुपि' from no. 77 and explain it as a distinct rule. The effect is—through the अनुवृत्ति of "एङि पररूपम्"—to make the पररूप optional in the case of nominal roots. Thus उप एङ्कीयति = उपेङ्कीयति by पररूप and उपैङ्कीयति by वृद्धि (72). Similarly प्र ओघीयति &c.

मित—। 'वाक्यभेदेन' भिन्नवाक्यतया। अयमाशयः—इह "एङि पररूपम्" इति सूत्रस्थं वाक्यम्। अनुवृत्तिलब्धं "वा सुपि" इति द्वितीयम्। तत्र प्रथमं तावत् द्वितीयेन पृथक्वाक्यतया, द्वितीयनिरपेक्षतया, व्याख्यातव्यम्। तदेव कृतं लब्धञ्च ततः शुद्धे धातौ पररूपम्। पश्चात् प्रथमेन एकवाक्यतया द्वितीयं व्याख्येयम्। तेन च "एङि पररूपं वा सुपि" इत्यायाति अर्थश्च 'एङादौ सुब्धातौ परे पररूपं 'वा' भवति इति सम्पद्यते। एकवाक्याभिप्रायेण अनुवृत्तौ तु शुद्धे धातौ पररूपं नैव भवति, वृद्धा ऐजते, उपौषति इत्यादि च रूपमापद्यते॥

दी—। "एवे चानियोगे" ( वार्त्तिक )। नियोगः अवधारणम्। क्वेव भोक्ष्यसे। अनवक्लृप्तौ एवशब्दः। 'अनियोगे' किम्? तवैव।

Also when एव follows and indefiniteness (indecision) is implied. नियोग is decision. Thus in क्वेव etc.—where indeed would you eat—the place for eating is not finally settled and एव implies अनवक्लृप्ति (indecision); hence क्व एव क्वेव instead of the expected क्वैव। Why अनियोगे? Witness तव एव—certainly yours giving तवैव by वृद्धि।

मित—। "उपसर्गात्—" इत्यादि सर्वं निवृत्तम्। 'आत्' इत्यस्ति 'पररूपम्' इति च। अवर्णात् एवे परे च पररूपम् एकादेशः स्यात् अनियोगे गम्यमाने इत्यर्थः वृद्धेरपवादः। 'क्वेव भोक्ष्यसे' इत्यत्र भोजनस्थानं ते न पश्यामि इत्यर्थः, अतः भोजनं ते न सम्भाव्यते। 'अनवक्लृप्तिः' असम्भावना॥

७९। अचोऽन्त्यादि टि ॥ १।१।६४ ॥

दी—। अचां मध्ये यः अन्त्यः स आदिर्यस्य तत् टिसंज्ञं स्यात्।

In a word टि is the part of it that begins with the last of its vowels. In तद्धित the last vowel is अ and nothing comes after it; अ is the टि। In अग्निचित् the last vowel is इ and इत् is the टि।

मित—। शब्दे कस्मिंश्चित् सन्निविष्टा ये 'अचः' तेषां 'मध्ये यः अन्त्यः' अच् 'स आदिर्यस्य' शब्दचरमावयवस्य स चरमो भागः 'टि' इत्युच्यते। अचः इति निर्द्धारणे षष्ठी। जातावेकवचनम् ॥

दी—"शकन्ध्वादिषु पररूपं वाच्यम्" (वार्त्तिक)। तच्च टेः। शकन्धुः। कर्कन्धुः। कुलटा। सीमन्तः केशवेशे (गणसूत्र), सीमान्तोऽन्यः। मनीषा। हलीषा। लाङ्गलीषा। पतञ्जलिः। सारङ्गः पशुपक्षिणोः (गणसूत्र), साराङ्गोऽन्यः ॥ आकृतिगणोऽयम्। मार्त्तण्डः ॥

The form of the latter has to be declared as the single substitute in words listed with शकन्धु leading. And this relates to the टि of the first portion. Thus शक अन्धु = शक् (अ अ) न्धु शकन्धुः the well of the Sakas; कर्क अन्धु कर्कन्धुः the well of the Karka. कुल अटा कुलटा। सीमन् अन्त = सीम अन्त सीमन्तः if meaning parting of the hair; otherwise सीमान्तः as usual. मनस् ईषा = मन् (अस् ई) षा = मनीषा the टि here being अस् etc. पतत् अञ्जलि = पत् (अत् अ) ञ्जलि पतञ्जलि the टि being अत्। सार अङ्ग सारङ्गः meaning birds or beasts, otherwise साराङ्गः as usual. The list is added to from forms in use. Thus मार्त्तण्ड is in use. It suggests मृत अण्ड मृतण्ड by पररूप of टि and अ; next मार्त्तण्डः with अण attached.

मित—। शकन्धु प्रभृतिषु शकन्ध्वादिगणपठितेषु शब्देषु परस्य रूपम् एकादेशो भवति इति वाच्यम्। कयोः स्थाने पररूपम् इत्यपेक्षायामाह 'तच्च' पररूपं पूर्वस्य 'टेः' परस्य च आदेः ॥ 'शकानां' तदाख्यानां यवनानाम् 'अन्धुः' कूपः इति समासे

सुब्लोपे शक अन्धु शकन्धुः। कर्काणामन्धुः कर्कन्धुः। कर्कन्धु इति दीर्घान्तो बदरीपर्य्यायस्तु भिन्नः शब्दः। कुलस्य अटा कुलटा। सीम्नः अन्तः सीमन्तः केशविन्यासविशेषः सीमान्तो वा ग्रामसीमा। अत्र प्रथमेषु त्रिषु अ अ इति स्थिते पररूपम्। चतुर्थेऽपि "नलोपः प्रातिपदिकान्तस्य" इति सीमन् शब्दस्य नलोपे पररूपप्रवृत्तिकाले स एव विन्यासः। मनस ईषा गतिः इति समासे मनस् ईषा इति स्थिते अस् ई इत्येतयोः स्थाने ई इत्येकादेशः। एवम् हलस्य ईषा, लाङ्गलस्य ईषा लाङ्गलदण्डः। पतन् अञ्जलिः अस्मिन् अग्रे वा इति पतत् अञ्जलि इति स्थिते अत् अ इत्येतयोः स्थाने अ इत्येकादेशः। सारं शवलम् अङ्गमस्य इति समासे पररूपे सारङ्गः हरिणे चातके वा तदभावे साराङ्ग इति चित्राङ्गमात्रे॥ 'आकृत्या' शब्दस्य रूपेण 'गण्यते' गणे अन्तर्भाव्यते 'आकृतिगणः' प्रयोगतः अनुसर्त्तव्यो गण इत्यर्थः। मृतम् अण्डम् मृतण्डम् तस्यायमित्यणि कृते मार्त्तण्डः॥

दी—। "ओत्वोष्ठयोः समासे वा" ( वार्त्तिक )। स्थूलोतुः—स्थूलौतुः। विम्बोष्ठः—विम्बौष्ठः। समासे किम्? तवौष्ठः।

This is optional when ओतु or ओष्ठ is final in a compound. Thus स्थूलः ओतुः or स्थूलः ओतुर्यस्य gives स्थूल ओतु = स्थूलोतुः or स्थूलौतुः a fat cat or one having a fat cat. Similarly विम्बोष्ठः or विम्बौष्ठः bimba—like lips or one having such lips. Why say समासे? Witness तव ओष्ठः तवौष्ठः with the usual वृद्धि।

मित—। समासे ओतुशब्दे ओष्ठशब्दे च परे पूर्वस्य अकारस्य परस्य च ओकारस्य स्थाने एक ओकार आदेशः स्यात् वा इत्यर्थः। समासे समासमात्रे। तेन द्वन्द्वेऽपि। दन्तोष्ठम्—दन्तौष्ठम्।

८०। ओमाङोश्च॥ ६।१।९५॥

दी—। ओमि आङि च आत् परे पररूपमेकादेशः स्यात्। शिवायों नमः। शिव एहि शिवेहि।

Also when ओम् or आङ् follows अ or आ the form of the latter is the single substitute. Thus शिवाय ओम् शिवायोम्। An

example of आङ् is शिव एहि शिवेहि for एहि is आइहि with the prefix आङ्।

मित—। अत्र एहि इति आङ्पूर्वकस्य इणः लोटि मध्यमपुरुषैकवचने रूपम्। ततः शिव एहि इत्यत्र शिव आ इहि इति स्थितिः। तत्र तत्त्वबोधिनीकृतोमन्यन्ते "सवर्णदीर्घकृते पश्चात् आद्गुणे च सिद्धमिष्टम्" इति। अयमाशयः—सवर्णदीर्घे शिवा इहि ततो गुणे शिवेहि इति तदेव रूपम्। अत्रेदं द्रष्टव्यम्—इह धातूपसर्गयोः कार्य्यं गुणः वाह्यनिरपेक्षम् अतएव अन्तरङ्गम्। सवर्णदीर्घस्तु वहिरङ्गम्। एकादेशेन शिवा इहि इति स्थिते योऽयम् आकारः स "अन्तादिवच्च" इति परस्य आङः आदिवत्त्वात् उपसर्ग एव। तेन अयमपि गुणः अन्तरङ्गः। किञ्च असिद्धं वहिरङ्गमन्तरङ्गे इति शिवा इहि इत्यत्रापि शिव आ इहि इत्येव दर्शनम् शिव एहि इति च रूपम् शिवेहि इति नैव सिद्धमिष्टम्। तदर्थम् "ओमाङोश्च" इति सप्रयोजनम्॥

## ८१। अव्यक्तानुकरणस्यात इतौ॥ ६।१।९८॥

**दी—। ध्वनेरनुकरणस्य यः अच्छब्दः तस्मात् इतौ परे पररूपमेकादेशः स्यात्। पटत् इति पटिति।**

If इति comes after अत् which is final in a word that implies some inarticulate sound, the form of the latter vowel shall be the single substitute of the अत् and इ। Thus पटत् imitates the sound of something breaking. It has अत् at its end. If इति follows we get पटत् इति, i.e., पट् ( अत् इ ) ति = पटिति।

मित—। 'ध्वनेः' अव्यक्तनादस्य। 'अतः' इति पञ्चमी। 'अतः इतौ परे' इत्येतावता 'अत्' इति अनुकरणस्य अन्त्यो भागः ततश्च परम् 'इति' शब्दः इति गम्यते। 'पूर्वपरयोः पररूपम्' इत्यनुवर्त्तते। तेन 'अत् इ' इति समुदायस्य 'इ' इत्यादेशः। पटत् इति = पट् इ ति = पटिति। पडिति तु न। पटत् इति पदम्। तत एकादेशः पूर्वस्य अन्तवत् इति कृत्वा 'पट् इ' इति समुदायस्य पदसंज्ञा भवति, न हि

'पट्' इत्यंशस्य। तेन जश्त्वं न भवति॥ ननु इह 'त् इ' इत्येतयोरेव परः सन्निकर्षः, तत् अनयोरेव एकादेशोऽस्तु कथम् 'अत् इ' इत्येतयोः? उच्यते—उत्तरसूत्रे "नाम्रेड़ितस्य" इति निषेध आरभ्यते "अन्त्यस्य तु वा" इति विकल्पश्च। 'तु' इत्यव्ययं भेदं वक्ति। निषेधस्य विकल्पस्य च विषयो भिन्नः। 'अन्त्यस्य' इति स्फूटोक्त्या तकारमात्रं विकल्पविषयः। तेन निषेधविषयः 'अत्' इति। प्राप्तस्यैव निषेधो भवति। अतः प्रस्तुते सूत्रे 'अत्' इत्यस्य विधिः उत्तरे 'अत्' इत्यस्य निषेधः 'त्' इत्यस्य विकल्पः॥ नागेशस्तु "अलोऽन्त्यस्य" इत्यनेन इह तकारमात्रस्य आदेशः स्यात् इति शङ्कामुपस्थाप्य "नानर्थकेऽलोऽन्त्यविधिः" इति निषेधमवलम्ब्य तां निरस्यति। अयमाशयः—अर्थवान् यः शब्दः तस्य आदेशे कर्त्तव्ये अन्त्यस्यैव वर्णस्य भवति। अनर्थकस्य आदेशः समुदायस्य। इह 'पटत्' इत्यर्थवान् न च पुनः 'अत्' इति तस्य अंशमात्रस्यापि अस्ति कश्चिदर्थः। तेन 'अत्' इति समुदायस्य आदेशः न तस्य अन्त्यस्य तकारमात्रस्य॥ नूनं प्रचिन्त्यमेतत् शेखरे। यः षष्ठ्या निर्द्दिष्टः तस्यैव अन्त्यस्य अलः आदेशः। क इह षष्ठ्या निर्दिष्टः सूत्रे? न हि 'अतः' इति। 'अतः' इति पञ्चम्यन्तत्वेन व्याख्यातम्। षष्ठीनिर्दिष्टं तु अनुवर्त्तितत्वं 'पूर्वपरयोः' इति। तत् अव्यक्तस्य तकारस्थाने आदेशः स्यात् इति शङ्कायाः प्रसङ्ग एव नास्ति कीदृशः किल तस्य निरासः?

दी—। "एकाचो न" (वार्त्तिक)। श्रदिति।

This is not available when the imitation contains oniy one vowel. Thus श्रत् imitates the sound of a body falling from a tree through its leaves, or the friction sound of a body rapidly passing over a surface. It ends in अत्, yet as there is only one vowel in it the अत् does not change. Hence श्रत् इति श्रदिति।

मित। अव्यक्तानुकरणस्य अत इतौ इति सर्वमस्ति। 'एकाचः' इति अव्यक्तानुकरणस्य इत्यस्य विशेषणम्। एकः अच् यस्मिन् तादृशस्य अव्यक्तानुकरणस्य अतः इतौ पररूपं न स्यात् इत्यर्थः। श्रत् इत्यव्यक्तानुकरणम् अदन्तम् एकाच्। अस्य पररूपं न भवति॥

८२। नाम्रेड़ितस्यान्त्यस्य तु वा ॥६।१।९९॥

दी—। आम्रेड़ितस्य प्रागुक्तं न स्यात्। अन्त्यस्य तु तकारमात्रस्य वा स्यात्। 'डाचि बहुलं द्वे भवतः' (वार्त्तिक) इति बहुलग्रहणात् द्वित्वम्।

[ N.B.—Here the sentences have to be taken in a different order ]

In पटत् इति the imitation is sometimes duplicated irregularly (बहुलम्) because, though the Varttika "डाचि बहुलम्—" announces the duplication in connection with डाच् only, still the word बहुल in it indicates irregularity in the matter of duplication—sometimes it takes place without डाच् or even without any affix at all. Here duplication gives पटत् पटत् इति। We expect पटत्पटिति by the last rule ( by पररूप ); but no, the पररूप enjoined by the last rule is not available in an आम्रेड़ित word, which however takes पररूप in its very last letter only ( i.e., in तकार )। Well, what is an आम्रेड़ित ?

मित—। पटत् इति इत्यत्र क्वचित् पटच्छब्दस्य द्वित्वं भवति। तत्तु "डाचि बहुलम्—" इति डाचि विषये द्वित्वविधाने 'बहुलग्रहणात्' बहुलशब्दस्य उच्चारणात् सिद्धम्। अन्यत्रापि कदाचित् भवति इति तस्यार्थः। एतेन 'पटत् पटत् इति' इति जातम्। अत्र 'पटत् इति' इत्यत्र पूर्वसूत्रेण 'पटिति' इति प्राप्ते निषेधमाह 'आम्रेड़ितस्य प्रागुक्तं' कार्य्यम् अच्छब्दस्य पररूपं 'न स्यात्'। किन्तु अन्त्यस्य तकारमात्रस्य वा' पररूपं स्यात्'। आम्रेड़ितं व्याख्यायते—

८३। तस्य परमाम्रेड़ितम् ॥ ८।१।२ ॥

दी—। द्विरुक्तस्य परं रूपम् आम्रेड़ितसंज्ञं पटत्पटेति।

The latter half of a double form is आम्रेड़ित (the repetition). In our example पटत् पटत् इति the पटत् immediately before इति is आम्रेड़ित। The पररूप of its अत् is prohibited but its तकार

takes पररूप optionally. Thus with पररूप we have पटत् पट ( त् इ ) ति = पटत् पट इ ति = पटत् पटेति। Without पररूप we get पटत् पटत् इति and look forward.

मित—। यत् 'द्विरुक्तं' तस्य 'पररूपम्' अन्त्यो भाग: 'आम्रेड़ितसंज्ञं स्यात्' आम्रेड़ितम् इति कथ्यते। आम्रेड़ितं पुनरुक्तम्। उदाहरणे 'पटत् पटत् इति' इत्यत्र इति शब्दात् पूर्वं य: पटच्छब्द: स आम्रेड़ितम्। तस्यैव अन्नागस्य पररूपं न भवति तकारस्य तु वा भवति। तकारस्य पररूपे पटत् पट इति पटत् पटेति। पररूपाभावे 'पटत् पटत् इति। इति स्थिते—

८४। झलां जशोऽन्ते ॥ ८।२।३९ ॥

दी—। पदान्ते झलां जशः स्युः। पटत् पटदिति।

A झल् letter (i.e. a consonant except अन्तःस्था and वर्गपञ्चम) changes into a जश् letter (i.e. वर्ग तृतीय) when at the end of a पद। Here in पटत् इति changing the त् into द् we get पठद् इति। Thus the final is पठत् पटदिति।

मित—। झल् जश् इति प्रत्याहार:। 'अन्ते' पदान्ते। अन्तःस्थावर्गपञ्चम-वर्जितानां व्यञ्जनानां पदान्ते स्थितानां स्थाने वर्गतृतीय आदेश: स्यादित्यर्थः। उदाहरणे पटत् इति पदम्। तकार पदान्ते स्थित:। तस्य दकारे पटत् पटदिति। प्रथमस्य पठच्छब्दस्य तु न जश्, परवर्त्तिना दकारेण "खरि च" इति चर्त्वविधानात् ॥

८५। अक: सवर्णे दीर्घ: ॥ ६।१।१०१ ॥

दी—। अकः सवर्णे अचि परे दीर्घ एकादेशः स्यात्। दैत्यारिः। श्रीशः। विष्णूदयः। 'अचि' किम्? कुमारी शेते। "नाज्झलौ" ( १३—१।१।१०) इति सावर्ण्यनिषेधस्तु न दीर्घशकारयोः ग्रहणकशास्त्रस्य सावर्ण्यविधिनिषेधाभ्यां प्राक् अनिष्पत्तेः। 'अकः' किम्? हरये। "अकोऽकि दीर्घः" इत्येव सुवचम् ॥

When a सवर्ण vowel follows ( अचि ) अ, इ, उ, ऋ, ऐ ( अकः ) the corresponding long vowel shall be the single substitute for both. Thus दैत्य अरि दैत्यारिः, श्री ईश श्रीशः, विष्णु उदय विष्णूदयः। Why say अचि ? Witness कुमारी शेते in which the long vowel is not substituted for ई and श because though these are सवर्ण, the श is not an अच्। It cannot be said that the rule "नाज्झलौ" prohibits the सवर्णता of अच् and हल्, so ई and श are not सवर्ण at all, hence no एकादेश and अचि here is unnecessary. The reason is अच् in that rule refers to the short vowels only as given in the Sivasutras ; and these short vowels do not include the long and prolate ones also, because the rule "अणुदित्—" (14—1.1.69) which allows such inclusion is not enunciated before the rules "तुल्यास्य—" and "नाज्झलौ" which define and restrict सवर्णता। Why say अकः ? Witness हरे ए हरये with अय् substituted for the ए in हरे because ए is not an अक्। The sense of the rule is better expressed by "अकोऽकि दीर्घः"।

मित—। 'अकः' इति पञ्चमी। 'अचि' इत्यस्ति, 'सवर्णे' इति तस्य विशेषणम्। 'एकः पूर्वपरयोः' इति चास्ति। दैत्यानामरिः इति समासे सुब्लुकि दैत्य अरि इति। अकारयोर्दीर्घे आकारे कृते दैत्यारिः। एवमन्यत्रापि॥ ननु इह 'सवर्णे' इत्येतावतैव अकारात् परमकारः, इकारादिकार इत्यादि गम्यते तत् 'अचि' इति निष्प्रयोजना अनुवृत्तिः किं क्रियते ? उत्तरमाह—कुमारी शेते इत्यत्र ईकारशकारयोः सवर्णयोः दीर्घे एकादेशे कृते कुमारी एते कुमार्येते इत्यनिष्टं प्रसज्यते तत् परिहारार्थम् 'अचि' इत्यनुवृत्तिः॥ नेतदस्ति "नाज्झलौ" इति प्रतिषिद्धा ईकारशकारयोः सवर्णता॥ नैवम्। अच् इति प्रत्याहारः। तत्र 'इ' इष्यते न तु 'ई' इति। तत् इकारशकारयोरेव प्रतिषिद्धा न च ईकारशकारयोरपि॥ ननु "अणुदित्—" इति ग्रहणकशास्त्रेण "नाज्झलौ" इत्यत्र अचा इकारस्य सवर्ण ईकारोऽपि गृह्यत एव। तत् सिद्धः प्रतिषेधः॥ न सिद्धः। सावर्ण्यमवलम्ब्य ग्रहणकशास्त्रं प्रवर्त्तते। तत् सावर्ण्यव्यवस्थापनात् 'प्राक् ग्रहणकशास्त्रस्य अनिष्पत्तिः'। 'सावर्ण्यं च "तुल्यास्य—" इति 'विधिना' "नाज्झलौ" इति निषेधेन' च व्यवस्थाप्यते

तत्कालमविद्यमानं ग्रहणकशास्त्रं कथम् 'अच्' इत्यनेन ईकारं ग्राहयेत्? एवम् ईकारअकारयोरस्त्येव सवर्णता सप्रयोजना च 'अचि' इत्यनुवृत्तिः॥

दी—। "ऋति सवर्णे ऋ वा" (वार्त्तिक)। होतृकारः—होतॄकारः।

If the सवर्ण following is a short ऋ, the single substitute is optionally ऋ, Thus होतृः ऋकारः compounded gives होतृ ऋकार= होतृकारः with ऋ substituted by this Varttika, or होतॄकारः with दीर्घ by the rule. This ऋ looks like short ऋ but is really different from it (See below).

मित—। अकः ऋति सवर्णे परे ऋ इत्येकादेशो वा स्यात्। पक्षे दीर्घः। ऋ वा इत्युच्यते, न तु ऋत् वा इति। तत् अयमेकादेशः ह्रस्वात् ऋकारात् भिन्नः। एतच्च उपरिष्टात् स्फुटीभविष्यति॥

दी—। "ऌति सवर्णे ऌ वा" (वार्त्तिक) होतॢकारः पक्षे ॠकारः, सावर्ण्यात्। होतॄकारः।

If a short ऌ is the सवर्ण following the substitute is optionally ऌ। Thus in होतृ ऌकार the ऌ is short and is सवर्ण of the ऋ preceeding. Hence होतॢकारः। The alternative दीर्घ substitute is ॠ because ऋ and ऌ are सवर्ण and ऌ has no दीर्घ form of its own. Here again the ऌ substituted is not short ऌ (See below).

मित—। व्याख्यानं प्राग्वत्। इहापि ह्रस्वात् ऌकारात् भिन्नोऽयमेकादेशः। दीर्घपक्षे ऌकारस्य दीर्घाभावात् ऋऌवर्णयोः सावर्ण्यमाश्रित्य ॠकारः क्रियते।

दी—। "ऋति ऋ वा" "ऌति ऌ वा" इत्युभयत्रापि विधेयं वर्णद्वयं द्विमात्रम्। आद्यस्य मध्ये द्वौ रेफौ। तयोरेका मात्रा, अभितः अज्भक्तेः अपरा॥ द्वितीयस्य तु मध्ये द्वौ लकारौ। शेषं प्राग्वत्॥ इह उभयत्रापि "ऋत्यकः" इति पाक्षिकः प्रकृतिभावो वक्ष्यते॥

In "ऋति—" and "ऌति—" the substitutes are both of two *matras*. In the former, the ऋ has the sound of र् doubled in

the middle. These together give one *matra* Also before and after the sound of र् र् the natural vowel sound of ऋ is heard in equal lengths of half a *matra* each giving together one *matra*. Hence altogether we have two *matra* in this ऋ whereas the short ऋ has only one *matra* in it. The ऌ substitute is just like the ऋ with the only difference that in the middle it has ल् ल् instead of र् र्। In both these Varttikas optionall प्रकृतिभाव will be declared hereafter by the rule "ऋत्यकः"। This will give three forms होतृ ऋकारः—होतॄकारः—होतृ ऋकारः &c.

मित—। 'विधेयं वर्णद्वयम्' ऋ इति ऌ इति च रूपद्वयम्। 'मात्रा' उच्चारणकालमानम्। 'द्विमात्रम्' अतएव 'होतृकारः' इति मुद्रितपुस्तकेषु स्थितं रूपं चिन्त्यं होतॄकार इत्येव युक्तं प्रतिभाति। 'आद्यस्य' ऋ इत्यस्य। 'मध्ये द्वौ रेफौ' इति तु श्रूयमाणध्वनिपक्षे न हि दृश्यमानरूपपक्षे। 'अभितः' तौ रेफौ अभितः, रेफयोः पूर्वं परञ्च इत्यर्थः। 'भक्तिः' भागः अंशः। अज्रूपा भक्तिः 'अज्भक्तिः' स्वरभागः। अयं भावः—ऋकारस्य उच्चारणं किञ्चिदिव 'इर् इ' इतिवत् आद्यन्तयोः स्वरश्रुतिः मध्ये र् इति व्यञ्जन श्रुतिः परं क्वापि न पूर्णाश्रुतिः। स्वरश्रुतिः प्रत्येकमर्द्धमात्रा व्यञ्जनन्तु श्रुतमपि अश्रुतवत्। एवम् अनुपलब्धप्रायायां व्यञ्जनमात्रायां ह्रस्वो ऋवर्ण एकमात्रः। आदेशे तु मध्यगता रश्रुतिः न केवलं पूर्णा अपि तु द्विरुपलब्धा। एवं गर्भे रश्रुती प्रत्येकमर्द्धमात्रा अभितः स्वरश्रुती प्रत्येकमर्द्धमात्रा इति कृत्वा द्विमात्र आदेशः॥ 'द्वितीयस्य' ऌ इत्यस्य॥

## ८६। एङः पदान्तादति ॥६।१।१०९॥

**दी—। पदान्तात् एङः अति परे पूर्वरूपमेकादेशः स्यात्। हरेऽव। विष्णोऽव ॥**

If short अ follows an एङ् which is final in a पद, the former is the single substitute forboth. Thus हरे अव=हर् ( ए अ ) व=हर् एव हरेऽव save me O Hari. विष्णो अव=विष्णु ( ओ अ ) व विष्णोऽव। save me O Vishnu. Here the ऽ is not a better but a mere sign to show that अ has disappeared.

मित—। 'एङः' इति पञ्चमी'। 'पदान्तात्' पदान्ते स्थितात्। "अमि पूर्वः (६।१।१०७) इत्यतः 'पूर्वः' इत्यनुवर्त्तते। पूर्वः पूर्वरूपम्। 'एकादेशः' इत्यस्ति।

## ८७। सर्वत्र विभाषा गोः ॥६।१।१२२॥

**दी—। लोके वेदे च एङन्तस्य गोः अति वा प्रकृतिभावः स्यात् पदान्ते। गो अग्रम्—गोऽग्रम्। 'एङन्तस्य किम्? चित्रग्वग्रम्। 'पदान्ते' किम्? गोः॥**

If short अ follows गो which is final in a पद and ends in ओ the गो will optionally stand as it is everywhere, in the Vedas or in Bhasha. Thus गवाम् अग्रम् compounded gives गो अग्र in which गो is a पद। Hence one form is गो-अग्रम् with गो as it is (प्रकृतिभाव)। But as this is optional an alternative form is गोऽग्रम् through पूर्वरूप by "एङः पदान्तादिति"। Why say एङन्तस्य? Listen—चित्रा गावो येषाम् gives चित्र गो=चित्रगु by the rule "गोस्त्रियो-रुपसर्जनस्य"। चित्रगूणाम् अग्रम् yields the form चित्रगु अग्र in which चित्रगु is a पद। This पद has गो final in it, but it is उकारान्त not एङन्त। Hence no प्रकृतिभाव and the form is चित्रग्वग्रम् by "इको यणचि"। Why say पदान्ते? Witness गो अस् in the fifth or sixth case singular where गो not being पदान्त we do not get प्रकृतिभाव and the rule "ङसि ङसोश्च" (६।१।११०) gives गोः।

मित—। इह पाणिनीयविन्यासे पूर्वंगतानि सप्त सूत्राणि छन्दोविषयाणि। तत् 'सर्वत्र' इत्यस्य न केवलं छन्दसि भाषायामपि इत्यर्थः। अत आह 'लोके वेदे च' इति। "एङः पदान्तादति" इति सर्वमनुवर्त्तते 'एङः' इति च प्रथमया विपरिणम्यते 'गोः' इति षष्ठी शेषे। 'गोः एङ्' इति सम्बन्धः। "प्रकृत्यान्तःपादमव्यपरे" (६।१।११५) इत्यतः 'प्रकृत्या' इति चानुवृत्तम्। तदेष मिलितोऽन्वयः—सर्वत्र विभाषा गोः पदान्त एङ प्रकृत्या अति। 'प्रकृत्या' स्वकीयेन भावेन तिष्ठति इति शेषः स्वं रूपं न जहाति इत्यर्थः। इममेवार्थमाह 'लोके वेदे च' इत्यादिना। चित्रा गावो येषामिति विग्रहे 'गो' इत्युपसर्जनम्। "गोस्त्रियोरुपसर्जनस्य" (६५६—१।२।४८) इति ह्रस्वत्वे 'चित्रगु' इति प्रातिपदिकम्। ततः चित्रगूणाम् अग्रम् इति समासे चित्रगु अग्र इति

जाते 'गु' इति पदान्तो गोशब्दः, परं नायमेङन्तः। तेन प्रकृतिभावो न। यणि कृते चित्र्ग्वग्रम्। इह 'गो' इत्यस्य ऐकदेशः ओकारः। तस्मिन् विकृते 'गु' इत्यपि न 'गो' इत्यस्मात् अन्यः। तथा च परिभाषा "एकदेशविकृतमनन्यवत्" इति॥

## ८८। अवङ् स्फोटायनस्य ॥६।१।१२३॥

**दी—। 'अति' इति निवृत्तम्। अचि परे पदान्ते गोः अवङ् वा स्यात्। गवाग्रम्। 'पदान्ते किम्? गवि। व्यवस्थितविभाषया गवाक्षः।**

Here अति does not come in; अचि continues. When an अच् follows, अवङ् is substituted optionally for the ओ of गो if it is final in a पद। Thus गो अग्र gives गव अग्र=गवाग्रम्। This being optional we have also the other two forms given before. Why say पदान्ते? Witness गो इ in the seventh case singular yielding गव् इ=गवि with अव् for ओ। The option is restricted, there are instances in which the अवङ् is obligatory. Thus गवाम् अक्षि gives गो अक्ष where अवङ् is compulsory, yielding गव अक्ष= गवाक्षः।

मित—। 'अति' इति नेह सम्बध्यते, तदाह 'अति इति निवृत्तम्' इति। 'अचि' इति तु व्यापिनी अनुवृत्तिरस्त्येव। 'पदान्तात्' इत्यस्ति षष्ठ्या तु विपरिणम्यते; ततः पूर्वसूत्रादनुवृत्तं 'गोः' इति षष्ठ्यन्तं विशेषयति। तेनायमर्थः—अचि परे पदान्तस्य गोशब्दस्य अवङ् आदेशः स्यात् स्फोटायनस्य आचार्य्यस्य मतेन, अन्येषामाचार्य्याणां तु अवङ् नास्ति। इममेव मतभेदमवलम्ब्य प्राह 'अवङ् वा स्यात्' इति। अवङि ङकार इत् 'अव' इति शेषः। स च नहि सर्वस्य गोशब्दस्य स्थाने भवति किन्तु "ङिच्च" इति सूत्रेण अन्त्यवर्णस्यैव ओकारस्य। अवङि कृते गव अग्र इति स्थिते गवाग्रम्। इह द्वौ विकल्पौ, अत्र एकः पूर्वसूत्रे चापरः। भिन्नविषयकौ हि तौ। अवत्यस्तु अवङ्भावं प्रति। अकृते अवङि प्रकृतिभावपक्षे पूर्वविकल्पः प्रवर्त्तते॥ अवङ्भावस्तु व्यवस्थितः; इह वैकल्पिकः इह नित्यः इत्यस्ति तस्य व्यवस्था। सा च प्रयोगादनुसर्त्तव्या। 'गवाक्षः' इत्यत्र अवङ् नित्यः। गवां किरणानाम् अक्षि

इव इति विग्रहे गो अचि अच् समासान्तः = गो अच। अवङि गव अच गवाचः। लोकव्यवहारात् पुंस्त्वम्।

८९। इन्द्रे च ॥६।१।१२४॥

दी—। गोः अवङ् स्यात् इन्द्रे। गवेन्द्रः।

गो takes अवङ् when इन्द्र follows. Thus गो इन्द्र गव इन्द्र गवेन्द्रः।

मित—। 'गोः अवङ्' इत्यनुवृत्तिलब्धम्। 'अचि' इत्यस्ति। इन्द्रे इति तद्विशेषणम्। इन्द्रशब्दस्थे अचि इत्यर्थः। गोशब्दात् परम् इन्द्रशब्दस्य अच् समासे एव सम्भवति। तथैव उदाहरति गवेन्द्र इति॥ किञ्च सामान्येन अचि गोशब्दस्य अवङ् विहित एव, तत् किं सविशेषणे अचि पुनर्विधानेन? नित्यार्थं पुनर्विधानम् पूर्वेण विकल्पो मा भूदिति॥

## अथ प्रकृतिभावः।

९०। प्लुतप्रगृह्या अचि नित्यम् ॥६।१।१२५॥

दी—। प्लुताः प्रगृह्याश्च वक्ष्यन्ते। ते अचि परे नित्यं प्रकृत्या स्युः। एहि कृष्ण, अत्र गौश्चरति। हरी एतौ। 'नित्यम्' इति किम्? 'हरी एतौ' इत्यादौ अयमेव प्रकृतिभावो यथा स्यात् "इकोऽसवर्णे—" इति ह्रस्वसमुच्चितो मा भूत्।

*Pluta* and *Pragrihyas* will be indicated. They will always retain their natural form when an अच follows. Thus in एहि कृष्ण, the अ final in कृष्ण is प्लुत by "वाक्यस्य टेः—" (93—8 2. 82); this retains its form unchanged though अ follows and gives occasion for सवर्णदीर्घ। In हरी एतौ the ई is a प्रगृह्य (100—1. 1. 11) so does not change though ए follows. Why say नित्यम्? This is because, without नित्य, in cases like हरी एतौ (where the latter vowel is असवर्ण) the next rule "इकोऽसवर्णे—" would

introduce an alternative form with a ह्रस्व substitute whereas it is the प्रकृतिभाव above that is wanted.

मित—। 'प्रकृत्या" इत्यनुवर्त्तते। 'अचि' इत्यनुवर्त्तमानेऽपि 'अचि' इति किम्? परवर्त्तिनि अचि निमित्तभूते यत् रूपान्तरं प्राप्तं तदेवानेन बाध्यते इति ज्ञापयितुं पुनरज्ग्रहणम्। तथा च 'जानु उ अस्य रुजति' इत्यत्र 'उ' इति प्रगृह्यसंज्ञो निपातः। सः 'अस्य' इत्यकारे परे तन्निमित्ते वकारे कर्त्तव्ये प्रकृत्या तिष्ठति। परं पूर्वेण उकारेण अह सवर्णदीर्घे कर्त्तव्ये न प्रकृतिभावः। भवति च 'जानू अस्य रुजति'। 'अयमेव प्रकृतिभावः' अत्रोक्तः केवलः प्रकृतिभाव इत्यर्थः। कीदृशः प्रकृतिभावो मा भूत्? ह्रस्वेन समुच्चितः प्रकृतिभावः "इकोऽसवर्णे—" इति विहितो यः पाक्षिकः प्रकृतिभावः सः इत्यर्थः 'मा भूत्'। मा भूत? 'हरी एतौ' इत्यादौ' प्लुतप्रगृह्ययोरित्यर्थः। अधिकमग्रे॥

## ८१। इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ॥ ६।१।१२७॥

दी—। पदान्ता इकः असवर्णे अचि परे प्रकृत्या स्युः। ह्रस्वश्च वा। अत्र ह्रस्वविधि—सामर्थ्यादेव प्रकृतिभावे सिद्धे तदनुकर्षणार्थश्चकारो न कर्त्त०य इति भाष्ये स्थितम्। चक्रि अत्र—चक्री अत्र चक्रयत्र। 'पदान्ताः' इति किम्? गौर्य्यौ।

An इक् when final in a पद optionally remains unchanged or changes into a short vowel. This is what Sakalya declares. Here the Bhashya remarks that the च in the rule is unnecessary if its object is to bring in प्रकृतिभाव as an alternative ; because ह्रस्वविधि pre-supposes प्रकृतिभाव। Hence Sakalya's two forms along with the यण् of other Professors as given in "इको यण्—" give altogether three forms. Thus चक्री अत्र (the discus-holder is here) yields चक्री अत्र (प्रकृति भाव)—चक्रि अत्र (ह्रस्व)—चक्रात्र (यण्)। Why say पदान्ताः? Witness गौरी औ (dual form of गौरी) गौर्य्यौ where the ई—not being पदान्त Sakalya's two forms are not available.

मित—। 'पदान्ताः' इति अनुवर्त्तिलभ्यम्। "एङः पदान्तात्—" इत्यतः

पदान्तात् इत्यनुवर्त्तते प्रथमया च विपरिणम्यते। 'इकः' इति प्रथमान्तम्। 'प्रकृत्या' इति सूत्रस्थितेन च-कारेण अनुकृष्यते। तदाह—'पदान्ता इकः' इत्यादि। एतावता पक्षद्वयमुच्यते—प्रकृतिभाव इत्येकः पक्षः, ह्रस्व इति द्वितीयः। एक एव पक्ष इति चेत् विप्रतिषेधः प्राप्नोति। य एव प्रकृत्या स एव ह्रस्व इति विप्रतिषिद्धम्। ह्रस्वता इति विकारः प्रकृतिभावविरोधिनी। यो हि ह्रस्वः स प्रकृत्या इत्युक्ते भाष्योक्तं सिद्धस्यैव पुनः साधनमापद्यते। कृते ह्रस्वे यदि यण्, किं कृतं ह्रस्वविधिना? अकृतेऽपि ह्रस्वे स एव यण् भवतीति व्यर्थो ह्रस्वविधिः। तत् सुष्ठूक्तं "ह्रस्वविधि-सामर्थ्यादेव" इत्यादि। एवं पक्षद्वये सिद्धे विकल्पो भवति इति फलितम्। तदाह 'ह्रस्वश्च वा' इति। वा-शब्द इह अर्थादायातः न हि 'शाकल्यस्य' इत्यतो लभ्यः। शाकल्यस्यैव वैकल्पिकं पक्षद्वयम्। अन्येषामाचार्य्याणां किम्? अन्येषां यण्। अस्माकं तु सर्वे एव प्रमाणम्, तत् चक्रि अत्र इति स्थिते चक्री अत्र (प्रकृतिभाव)—चक्रि अत्र (ह्रस्व)—चक्र्यत्र (यण्) इति त्रीणि रूपाणि॥ इह भाष्ये सूत्रस्य चकारस्य अन्यदपि प्रयोजनमुक्तम्—चकारेण 'प्लुतप्रगृह्याः प्रकृत्या' इति सर्वमनुकृष्यते इति। अस्मिंस्तु पक्षे "इकोऽसवर्णे शाकल्यस्य ह्रस्वः" इत्येकं वाक्यम् "प्लुतप्रगृह्याः प्रकृत्या च" इत्यन्यत्। 'इकः' इति षष्ठी 'पदान्तस्य' इति षष्ठ्या विपरिणामः। पदान्तस्य इकः ह्रस्वः शाकल्यस्य इत्यर्थः। ततः तु प्लुतप्रगृह्यव्यतिरिक्तानां ह्रस्वो वा यण् वा इति द्विविधमेव रूपम्, प्रकृतिभावस्तु तेषां न लभ्यते। अयमेव वृत्तिकारादीनामभिमतः पक्षः। ते हि प्रकृतिभावं नोदाहरन्ति। नागेशोऽपि इममेव पक्षमादृत्य दीक्षितेन उदाहृतं चक्री अत्र इति प्रकृतिभावं प्रत्याह—"चक्री अत्र इति तु संहिताया अविवक्षया बोध्यम्"। नैतत् युक्तम्। अविवक्षायां 'चक्री अत्र इति स्थिते' इत्युच्येत, किञ्च चक्री अत्र इति ह्रस्वयणोर्मध्ये नोपलभ्येत। वस्तुतस्तु भाष्योक्तं प्रथमं पक्षमाश्रित्य त्रीणि रूपाण्युदाहृतानि इत्येव वक्तुमुचितं प्रतिभाति। स्फुटमेवोक्तं पूर्वसूत्रे "इकोऽसवर्णे" इति ह्रस्वसमुच्चितः प्रकृतिभावः इति॥

दी—। "न समासे" (वार्त्तिक) वाप्यश्वः।

This is not available in a compound. Thus compounding

वाप्याम् अश्वः we get वापी अश्व where ई is पदान्त ; but प्रकृतिभाव or ह्रस्व is disallowed. Hence वाप्यश्व with यण्।

मित—। 'न' इति शाकल्यस्य प्रकृतिभावो ह्रस्वश्च निषिध्यते। वाप्यामश्व इति यणि वाप्यश्वः।

दी—। "सिति च" ( वार्त्तिक )। पार्श्वम्।

Now when an affix dropping स follows. Thus पर्शु णस् in the sense पर्शूनां समूहः gives पार्श्वम् with यण्।

मित—। 'न' इति सम्बध्यते। सिति प्रत्यये च प्रकृतिभावो ह्रस्वश्च निषिध्यते। पर्शूनां समूहः इति णस्प्रत्यये कृते पर्शु अ इति जाते "सिति च" (१२५२—१।४।१६) इति उकारः पदान्तः। णित्त्वात् आदिवृद्धौ पार्श्वम्॥

८२। ऋत्यकः॥६।१।१२८॥

दी—। ऋति परे अकः प्राग्वत्। ब्रह्मऋषिः—ब्रह्मर्षिः। 'पदान्ताः' इत्येव। आर्च्छत्। समासेऽप्ययं प्रकृतिभावः। सप्तऋषीणाम्—सप्तर्षीणाम्।

When short ऋ follows an अक् final in a पद there will be प्रकृतिभाव and ह्रस्व optionally as above ( also गुण by आद्गुणः ). Thus in ब्रह्म ऋषिः where ब्रह्म is the neuter singular of ब्रह्मन् we get ब्रह्मऋषिः with प्रकृतिभाव and ब्रह्मर्षि with गुण। ह्रस्वादेश here gives the same form as प्रकृतिभाव। The अक् must be पदान्त। If not, witness आर्च्छत् which is the लङ् form of the root ऋ to go. आट् is the augment of the root and the root becomes ऋच्छ्। Thus आऋच्छ् is the form in which आ is not पदान्त। Hence no प्रकृतिभाव or ह्रस्व। The rule "आटश्च" (६।१।९०) now gives वृद्धि yielding आर्च्छ् etc. This प्रकृतिभाव is available in a समास also as in सप्तऋषीणाम् etc.

मित—। 'अकः' इति प्रथमा। 'प्राग्वत्' पूर्वसूत्रवत् शाकल्यस्य ह्रस्वश्च इत्यनुवर्त्यते। अकः प्रकृत्या वा ह्रस्वा वा स्युः इत्यर्थः। पक्षे यथाप्राप्तं गुणादयः।

ब्रह्म इति नपुंसकैकवचनम्। इह ब्रह्मकल्प इत्यर्थः। ब्रह्म ऋषिः इति स्थिते प्रकृतिभावे ब्रह्म ऋषिः ह्रस्वेऽपि तदेव गुणे ब्रह्मर्षि। इह 'ब्रह्मा ऋषिः' इति तु न दीर्घितस्य न्यासः। तथा सति ब्रह्मा ऋषिः (प्रकृति भाव) ब्रह्म ऋषिः (ह्रस्व) ब्रह्मर्षिः (गुण) इति त्रीणि रूपाणि स्युः॥ 'आर्च्छत्' इत्यत्र 'आट्' इति आगमः धात्ववयवः न पदान्तः। तेन न प्रकृतिभावः नापि ह्रस्वः। "आटश्च" इति वृद्ध्या आऋच्छत्=आर्च्छत्॥ इह च पूर्वसूत्रे च पदान्तमात्रे सूत्रकारस्य विधिः समासेऽपि भवति असमासेऽपि। वार्त्तिककारेण पुनः समासे पूर्वं प्रतिषिद्धम्। इह तु असति प्रतिषेधे 'समासेऽप्ययं प्रकृतिभावः'॥

## ९३। वाक्यस्य टेः प्लुत उदात्तः ॥८।२।८२॥

दी—। इत्यधिकृत्य—

The vowel in the टि of the sentence is प्लुत and उदात्त। This dominates what follows, i.e., this has to be taken with the rules that follow to complete their sense.

मित—। अतः परं प्लुता उच्यन्ते। तत्रत्येषु सूत्रेषु "वाक्यस्य टेः प्लुत उदात्तः" इति अधिकृतं वेदितव्यम्। अनेन सह सूत्राक्षराणां मिलितोऽन्वयः इत्यर्थः। अधिकमग्रे।

## ९४। प्रत्यभिवादेऽशूद्रे ॥८।२।८३॥

दी—। अशूद्रविषये प्रत्यभिवादे यद्वाक्यं तस्य टेः प्लुतः स्यात्, स च उदात्तः। अभिवादये देवदत्तोऽहम्। आयुष्मान् भव देवदत्त ३।

When a salute is to be returned to one other than a Sudra the vowel in the टि portion of the sentence used must be प्लुत and उदात्त। In the example अभिवादये etc. is the अभिवादन, and आयुष्मान् etc. the प्रत्यभिवादन with the final अ prolate in देवदत्त। Devadatta is a Brahmana.

मित—। आयुष्मान् भव इत्यादि प्रत्यभिवादवाक्यम्। अस्य वाक्यस्य यः टिः—देवदत्तशब्दे स्थितः अन्त्यः अकारः—स प्लुतः उदात्तश्च। देवदत्त इति ब्राह्मणः।

दी—। "स्त्रियां न" ( वार्त्तिक )। अभिवादये गार्गी अहम्। भो आयुष्मती भव गार्गि। नाम गोत्रं वा यत्र प्रत्यभिवादवाक्ये प्रयुज्यते तत्रैव प्लुत इष्यते। नेह—आयुष्मान् एधि।

But not when the salute is returned to a female. In the example गार्गी stands for a female Brahmana. The इ in गार्गि of the प्रत्यभिवाद is not प्लुत। The प्लुत is wanted only when the name or the clan is mentioned in the प्रत्यभिवाद। Thus in आयुष्मान् etc.—May thou be long-lived—the इ in एधि is not प्लुत।

मित—। 'स्त्रियां' विषये यः प्रत्यभिवादः तत्र प्लुतो 'न' भवति। 'गार्गी' इति ब्राह्मणी॥ यः प्लुतः स एव उदात्तः तेन 'प्लुत इष्यते' इत्युदात्तस्यापि संग्रहः॥

दी—। "भो राजन्यविशां वेति वाच्यम्" ( वार्त्तिक )। आयुष्मानेधि भोः ३। आयुष्मानेधीन्द्रवर्म् ३ न्। आयुष्मानेधीन्द्रपालित ३।

The प्लुत is optional when the प्रत्यभिवाद has भोस् final in it or refers to a क्षत्रिय or वैश्य। In the examples इन्द्रवर्मन stands for a क्षत्रिय and इन्द्रपालित for a वैश्य। The optional forms are आयुष्मान् एधि भो etc. without प्लुत।

मित—। 'राजन्य' इति क्षत्रियः, 'विश्' इति वैश्यः। 'भोस्' इत्येतावतैव नामगोत्रे संगृहीते इति मन्तव्यम्॥ इन्द्रवर्मन् इति क्षत्रियस्य नाम इन्द्रपालित इति वैश्यस्य॥ पक्षे प्लुताभावः—आयुष्मानेधि भोः आयुष्मानेधि इन्द्रवर्मन्, आयुष्मानेधि इन्द्रपालित इति।

८५। दूराद्धूते च ॥८।२८४॥

दी—। दूरात् संबोधने यद्वाक्यं तस्य टेः प्लुतः स्यात्। सक्तून् पिब देवदत्त ३।

When some one has to be addressed from a distance,

the sentence used must have the vowel in its टि portion प्लुत and उदात्त। In the example the intimation is सक्तून् पिब।

मित—। 'हूतम्' आह्वानम्। भावे क्तः। लक्षणया 'हूतम्' इह 'सम्बोधनम्'॥ 'दूरम्' इत्यापेक्षिकः शब्दः। नैसर्गिक प्रयत्न प्रेरितेन ध्वनिना यावान् देशो व्याप्यते तदपेक्षया 'दूरम्' इत्यर्थः। दूरस्थात् देशात् प्रयत्नाधिक्येन संबोधने कर्त्तव्ये यत्वाक्यमुच्चार्य्यते तस्य टेः प्लुतः स्यात् स च उदात्तः इत्यर्थः॥ उदाहरणे 'एहि भोः' इत्यादि आह्वानं नास्ति, सम्बोधनमात्र' तु अस्त्येव, ततः प्लुतः। सति सम्बोधने आह्वाने सत्यपि असत्यपि प्लुतो भवति॥ यत्र सम्बोधनपदं वाक्यस्यान्ते भवति तत्रैवायं प्लुत इति काशिका। तेन देवदत्त आगच्छ इत्यादिषु न॥

९६। हैहेप्रयोगे हैहयोः॥८।२।८५॥

दो—। एतयोः प्रयोगे दूराद्धूते यद्वाक्यं तत्र हैहयोरेव प्लुतः स्यात्। हे३ राम। राम है३।

If है or हे is used in the sentence while addressing from a distance only the है or the हे will have its टि as प्लुत even though they be not at the end of the sentence. In the first example the हे is not final yet its ए has become प्लुत। हे and है are अव्यय indicative of सम्बोधन।

मित—। 'दूराद्धूते' इत्यस्ति। है, हे इति सम्बोधन सूचकमव्ययद्वयम्। 'हैहयोरेव' अनन्त्ययोरपि तयोः अन्त्यस्यापि नान्यस्य इत्यर्थः। 'हे ३ राम' इत्यादि तु वाक्यावयवः न वाक्यम्। तत् 'हे ३ राम जहि रावणम्' इत्यादि पूरणीयम्।

९७। गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्॥८।२।८६॥

दो—। दूराद्धूते यद्वाक्यं तस्य ऋद्भिन्नस्य अनन्त्यस्यापि गुरोर्वा प्लुतः स्यात्। दे३वदत्त। देवद३त्त। देवदत्त३। 'गुरोः' किम्? वकारात् परस्य अकारस्य मा भूत्। 'अनृतः' किम्? कृष्णा३। एकैकग्रहणं पर्य्यायार्थम्।

In a sentence used while addressing from a distance a vowel becomes प्लुत optionally and by turn even when it is not in the टि portion provided it is heavy and other than a short ऋ। In the examples देवदत्त is the सम्बोधन पद and final in the वाक्य। Its टि is the final अ। This though light is प्लुत। Again the अ after द is heavy and therefore प्लुत; similary the ए in दे is प्लुत। But they are प्लुत only one at a time (एकैकस्य)। Hence there are three forms. Why say गुरोः? The अ after व will not be प्लुत। Why say अनृतः? Witness कृष्ण which has a heavy ऋ, but it is not प्लुत। Its टि alone will be प्लुत। एकैक in the rule implies that they are प्लुत only one at a time—each in its turn (पर्य्याय)।

मित—। दूराद्धूते इत्यस्ति। 'अनन्त्यस्यापि' प्लुतः स्यात्' इत्यन्वयः। तेन अन्त्यस्य स्यादेव इत्यायाति। अनन्त्यं विशिनष्टि 'गुरोः' इति। किम्भूतस्य गुरोः? 'ऋद्भिन्नस्य' गुरोः। इह 'दूराद्धूते' इति दूरत्वमविवक्षितं सम्बोधनमात्रे विधिरिति नागेशः। तेन प्रत्यभिवादेऽपि सम्बोधनपदे प्राप्तिः। ततश्च अयमर्थः—प्रत्यभिवादे दूराद्धूते च यद्वाक्यं तत्र स्थितस्य सम्बोधनपदस्य ये अचः तेषामन्त्यस्य प्लुतो वा स्यात् अनन्त्यस्यापि स चेदनन्त्यो गुरुः ऋद्भिन्नश्च॥ 'पर्य्यायार्थम्' इति एकस्य एकस्य स्यात् एकाधिकस्य युगपत् मा भूदित्यर्थः॥ 'प्राचां' पूर्वाचार्य्याणाम् पूर्वदेशीयानां वा। तेन विकल्पः॥ सम्बोधनपदमात्रमस्य विषयः तेन 'एहि देवदत्त' इति वाक्ये 'एहि' इत्यकारस्य प्लुतो न॥ "प्रत्यभिवाद्यमानार्थस्य हूयमानार्थस्य च शब्दस्य इदं प्लुतविधानं न यत्र तत्र स्थितस्य गुरोः" इति हरदत्तः॥

**दी—। इह 'प्राचाम्' इति योगो विभज्यते। तेन सर्वः प्लुतो विकल्प्यते।**

Here प्राचाम् is separated from the context and treated as an independent rule affecting the whole section on प्लुत। Hence every where प्लुत is optional.

मित—। 'योगः' सूत्रम्। 'प्राचाम् इति' सूत्रात् अपकृष्य सूत्रान्तरतया

पृथगवस्थाप्यते। प्रकरणान्ते "प्राचाम्" इति चेत् सूत्रं तर्हि सर्वं प्लुतप्रकरणं पूर्वाचार्य्यानुरोधेन इत्यर्थः सम्पद्यते। तदाह 'सर्वः प्लुतो विकल्प्यते' इति। प्राचां प्लुतः अन्येषां प्लुतो न। एतेन दे ३ वदत्त देवदत्त ३ इति प्राचामुदाहरणानि अन्येषां तु देवदत्त इति प्लुतवर्जितमुदाहरणम् इति फलितम्।

**९८। अप्लुतवदुपस्थिते ॥६।१।१२९॥**

**दो—। 'उपस्थितः' अनार्ष इतिशब्दः। तस्मिन् परे प्लुतः अप्लुतवद्भवति। अप्लुतकार्य्यं यणादिकं करोति। सुश्लोक ३ इति सुश्लोकेति। 'वत्' किम्? अप्लुत इत्युक्ते अप्लुत एव विधीयेत प्लुतश्च निषिध्येत। तथा च प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणं न स्यात्। अग्नी ३ इति।**

The word इति, except where used in the Vedas, is known as उपस्थित। When this follows, प्लुत becomes like अप्लुत, *i., e.*, takes यण् and other changes like an अप्लुत vowel, In the example the अ of क is प्लुत, yet it takes गुण। Why attach the affix वत्? If the rule had said अप्लुत उपस्थिते without वत् then अप्लुत would have been predicated of प्लुत and its प्लुत character would have disappeared altogether. But then, if the प्लुत is प्रगृह्य at the sametime, it will have प्रकृतिभाव because it is प्रगृह्य, yet it will have to be pronounced as, say, अग्नी इति not as is necessary अग्नी ३ इति।

मित—। ऋषिर्वेदः। आर्षो वैदिकः। वेदे प्रयुक्तात् अन्यो य इति शब्दः स 'उपस्थितः' इत्युच्यते। 'तस्मिन्' इतिशब्दे 'परे'। 'अप्लुतवत् भवति' अप्लुतेन सदृशो जायते। तदेव सादृश्यं दर्शयति—'यणादिकं' यत् 'अप्लुतस्य कार्य्यं' तत् 'करोति'। तत्कार्य्यकरणात् तत्सदृश इत्यर्थः। तत्सदृशस्तु न स एव। यथा गौः गर्दभकार्य्यं भारवहनं कृत्वा अपि आत्मनो गोत्वं न जहाति तथा प्लुतोऽपि इह अप्लुतकार्य्यं कुर्वन्नपि प्लुतधर्मविभावत्वं न जहाति॥ 'अप्लुत इत्युक्ते' न हि सादृश्यमात्रं प्रतीयते किन्तु 'अप्लुत एव' प्लुतस्य स्वरूपपरित्याग एव भवति। तत्र दोषः— 'अग्नी' इति द्विवचनं प्रगृह्यम् (१००—२।१।११)। यदा पुनरेतत् सम्बोधनपदं

तदा प्लुतश्च, 'अग्नी ३' इति च रूपम्। इतिशब्दे परे 'अग्नी ३ इति' इति स्थिते 'प्रगृह्यत्वात् प्रकृतिभाव:'। प्लुतत्वापगमे तु द्विमात्रम् 'अग्नी इति' इत्येतद्भवति दृश्यते च 'अग्नी ३ इति' इति त्रिमात्रस्य 'प्लुतस्य श्रवणम्' ॥

## ९९। इ ३ चाक्रवर्मणस्य ॥६।१।१३०॥

दी—। इ ३ कार: प्लुत: अचि परे अप्लुतवद्वा स्यात्। चिनु हि ३ इति—चिनु हीति। चिनु हि ३ इदम्—चिनु हीदम्। उभयत्र विभाषेयम्।

Chakravarmana declares that a प्लुत इकार is to be treatd as अप्लुत when अच् follows. This ensures विकल्प। In the examples each has two sentences ; चिनुहि is one sentence इति or इदम् (with आह understood) is the other चिनु means 'do you glean', 'do you gather' &c. हि implies अवधारण। Its इ is प्लुत by "विभाषा पृष्ट—" ( ३६१२—८।२।९३ )। This optional अप्लुतवद्भाव holds in both sets of possible cases, viz, cases covered by the rules ( नित्यप्राप्ते ) as well as those that are not so covered ( अप्राप्ते )।

मित—। इह सूत्रे 'ईत' इत्यपि पाठो दृश्यते। ऋस्वे इकारे मात्रा संख्यायोग एव साधीयान् प्रतिभाति। 'उपस्थिते' इति नास्ति, सामान्यत: 'अचि परे' विधि:। 'चाक्रवर्मणस्य' इत्याचार्य्यनामग्रहणात् विकल्प: ॥ उदाहरणे "अत:परं किं करवाणि" इत्येवं भृत्येन पृष्ट: स्वामी प्रतिवचनमाह "चिनु हि ३" पुष्पचयनमेव कुरु। तत्र "विभाषा पृष्ट" इति हेरिकार: प्लुत:। 'इति' 'इदम्' इत्यादि वाक्यान्तरे स्थितम् 'इत्याह' 'इदमाह' इत्येवम्प्रकारकञ्च तत् वाक्यम्। 'उभयत्र' इति प्राप्ते अप्राप्ते च इत्यर्थ:। तथा च 'इति' शब्दे परे पूर्वेण नित्ये प्राप्ते अनेन विकल्प:। 'इदम्' शब्दे परे अप्लुतविधेरभावात् अप्राप्ते अनेन अपलुतविकल्प: ॥

## १००। ईदूदेद्द्विवचनं प्रगृह्यम् ॥१।१।११॥

दी—। ईदूदेदन्तं द्विवचनं प्रगृह्यसंज्ञं स्यात्। हरी एतौ। विष्णू इमौ। गङ्गे अमू। पचेते इमौ। "मणीवोऽष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम" इत्यत्र तु इवार्थे वशब्दो वाशब्दो वा बोध्य:।

A dual affix ending in ई, ऊ or ए is called प्रगृह्य। In हरी we have हरि + औ where औ is द्विवचन। Next ई is the एकादेश of इ and औ। This by the rule "अन्तादिवच्च" is treated as परादि ; but द्विवचन is the पर here, so ई is द्विवचन and ईदन्त as well. Thus it is प्रगृह्य and takes प्रकृतिभाव by "प्लुत प्रगृह्याः—"। Similarly विष्णू &c. Now in the महाभारत we read मणीवोष्ट्रस्य &c. Apparently in मणीव there is मणी इव with सवर्णदीर्घ which goes against प्रकृतिभाव। The fact is इव in not the word here, but व or वा which mean इव। Thus मणी व उष्ट्रस्य or मणी वा उष्ट्रस्य = मणी वोष्ट्रस्य।

मित—। इह द्विवचनं प्रगृह्यम्' इति द्विवचनस्य संज्ञा क्रियते। किम्भूतं द्विवचनम्? 'ईदूदेत्' यत् द्विवचनं तत्। 'ईदूदेत्' इति संज्ञाविधाने करणम्। 'ईदूदेत्' इत्यनेन इह विधिः। तत् "येन विधिस्तदन्तस्य" इति 'ईदूदेदन्तं द्विवचनं गृह्यते' ॥ ननु "संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेः प्रतिषेधः"। संज्ञा चेह विधीयते ईदूदेदिति प्रत्ययश्च गृह्यते, तत् कथं तदन्तविधिः? उच्यते—द्विवचनमित्येव प्रत्ययः। ईदूदेदिति प्रत्ययविशेषणं न प्रत्ययः इत्यदोषः॥ हरी इत्यत्र ईकारः "अन्तादिवच्च" इति सूत्रेण परादिः, तेन द्विवचनम्। किञ्च असहायोऽपि अयमीकारः "आद्यन्तवदेकस्मिन्" इति सूत्रेण ईदन्तो व्यपदिश्यते। एतावता ईकारोऽयम् ईदन्तं द्विवचनम्। ततः प्रगृह्यसंज्ञा प्रकृतिभावश्च। एवमुत्तरत्रापि॥ प्रगृह्यशब्दः पुंनपुंसकयोः। इह नपुंसके प्रयोगः "प्लुतप्रगृह्या अचि नित्यम्" इति पुंसि॥ इवार्थे इत्यत्र "वंप्रचेतसि जानीयादिवार्थे च तदव्ययम्" इति "वा स्याद्विकल्पोपमयोः" इति च मेदिनी॥

## १०१। अदसो मात् ॥१।१।१२॥

**दी—। अस्मात् परौ ईदूतौ प्रगृह्यौ स्तः। अमी ईशः। रामकृष्णावमू आसाते। 'मात्' किम्? अमुकेऽत्र। असति माद्ग्रहणे एकारोऽप्यनुवर्त्तेत।**

ई and ऊ coming after the म of अदस् become प्रगृह्य। Thus अमी ईशाः though ई is not a द्विवचन। The ऊ in अमू

आसाते is a द्विवचन but not covered by the preceding rule (See Tika). Why say मात्? Witness अमुकेऽत्र where there is सन्धि; whereas without मात् the एत् too would have come in from the preceding rule, thus barring the सन्धि।

मित—। 'अदसः' इति, षष्ठी। 'अस्मात्' सूत्रोक्तात् शब्दात्। अदस्शब्दरूपे यो मकारस्तस्मादित्यर्थः। तत्र तत्र मकारात् पर एकारो न दृश्यते तत्पूर्वसूत्रस्थम् 'ईदूदेत्' इत्यनुवर्त्त्य असम्भवात् एदंशं परित्यज्य आह 'ईदूतौ प्रगृह्यौ' इति। 'अमी ईशाः' इत्यत्र द्विवचनाभावात् पूर्वेण न सिद्धिः। 'अमू आसाते' इत्यत्र 'रामकृष्णौ' इति साहचर्य्यात् पुंसि द्विवचनम्। तत्र अदस् औ इति स्थिते "त्यदादीनामः" इति अद औ अदौ इति प्राप्तम्। ततः "अदसोऽसेर्दादु दो मः" इति सूत्रम्। तत्तु "ईदूदेत्—" इत्येतत् प्रति "पूर्वत्रासिद्धम्" इत्यसिद्धम्। असिद्धेमूभावे तत्सूत्रमिह 'अदौ' इत्येव पश्यति न 'अमू' इति अतो न प्रवर्त्तते। स्त्रियां क्लीवे च 'अदे' इति प्रथममुत्पद्यते ततश्च अमू इति, परं 'अदे' इत्येतत् प्रति पूर्वसूत्रस्य प्रवृत्तिरस्ति अतः पुंस्येव उदाहृतम्॥ ननु असिद्धो मूभावः "अदसो—" इत्येतत् प्रत्यपि असिद्धः तदस्यापि इह अप्रवृत्तिः। मैवम्। इह स्फुटोक्त्या यत् 'मात्' इत्युक्तं सूत्रकारेण तेनैव असिद्धोऽपि मूभाव ज्ञातः॥ 'असति माद्ग्रहणे' "अदसः" इत्येतावत् सूत्रम्। अदसः इति पञ्चमी। अनुवृत्त्या अदसः परे ये ईदूदेतः ते प्रगृह्याः इत्यर्थो जायते। इह अकच् प्रत्यये कृते जसि 'अमुके' इति रूपम्। एवम् एकारस्यासम्भवे सति एदंश-परित्यागे कारणं नास्ति। तेन 'अमुके' इत्यत्र 'ए' इति प्रगृह्यम्। ततः अमुकेऽत्र इति न लभ्यते॥

## १०२। शे ॥१।१।१३॥

दी—। अयं प्रगृह्यः स्यात्। अस्मे इन्द्राबृहस्पती।

The Vedic substitute शे for the सुप् affixes is प्रगृह्य। Thus अस्मे इन्द्रा &c. May Indra and Brihaspati be propitious unto us.

मित—। शे इति सुपामादेशश्छान्दसः। शकार इत् 'ए' इति शुद्ध रूपम्।

चतुर्थ्यां बहुवचने अस्मद् भ्यस् इति स्थिते भ्यसः 'भ्यं' आदेशे 'अस्मे' इति रूपम् अस्मभ्यमित्यर्थः।

## १०३। निपात एकाजनाङ् ॥१।१।१४॥

दी—। एकः अच् निपात आङ्वर्जः प्रगृह्यसंज्ञः स्यात्। अ अवद्यम्। [इ वितर्के उ विस्मये (?)] इ इन्द्रः। उ उमेशः 'अनाङ्' इत्युक्तेः अङिदाकारः प्रगृह्य एव। आ एवं नु मन्यसे। आ एवं किल तत्। ङित्तु न प्रगृह्यः। ईषदुष्णम् ओष्णम् वाक्यस्मरणयोरङित् अन्यत्र ङित् इति विवेकः।

A vowel by itself, if a निपात, is प्रगृह्य except आङ्। Thus अ is a निपात implying censure, and we get no सन्धि in अ अवद्यम् (Fie ! this is reprehensible), Similarly इ इन्द्रः (Ha ! Indra has come) where इ implies surprise. Also उ उमेशः (Umesa too) उ having the sense of अपि। [N. B.—Here इ वितर्के, उ विस्मये seems to be an interpolation ]. The rule says अनाङ्, hence the आ that does not drop ङ is प्रगृह्य। Thus आ एवं नु मन्यसे (Ah ! Is that what you mean ? ), आ एवं किल तत् (It is indeed so). But the one that drops ङ is not प्रगृह्य। Witness आ उष्णम् ओष्णम् slightly warm—tepid. The distinction is this—आ is ङित् when implying recollection or previous misapprehension in other cases it is not ङित्।

मित—। एकश्चासौ अच् च एकाच् असहायः स्वरः अ इ उ इत्यादिः। एकः अच् यस्मिन् स एकाच् इति बहुव्रीहौ तु प्र, इत्यस्यापि प्रगृह्यत्वं भवति। ततश्च "प्रोपाभ्याम्" इत्यादि न सङ्गच्छते। 'निपातः' निपातसंज्ञकः। अव्ययत्वञ्चास्य "स्वरादिनिपातमव्ययम्" (४४७—१।१।३७) इति। वर्ज्यते त्यज्यते इति वर्जः कर्मणि घञ्। आङा वर्जः आङ्वर्जः आङ्भिन्न इत्यर्थः। 'अ' इति निपातः निषेधे अधिक्षेपे च वर्तते इति शब्दकौस्तुभः। अ अवद्यम् इत्यतः परम् "इ वितर्के उ विस्मये" इति केषुचित् पुस्तकेषु दृश्यते। मन्ये प्रक्षिप्तं तत्। एकत्वस्यावत् उदाहरणे पर्यनिर्देशो न हि दीक्षितस्य शैली। द्वितीयञ्च यदि इकारस्य उकारस्य

च अर्थों निर्दिश्यते अकारस्यापि निर्दिश्येत, न च निर्दिष्टः। तृतीयश्च इकारी-कारयोरर्थः कौस्तुभेन विरुध्यते। कौस्तुभे हि "इ विस्मये...उ जुगुप्सासन्तापान्वर्था-प्यर्थेषु" इत्युक्तम्। तन्नूनं लिपिकरैर्दूषित इह कौमुदीग्रन्थः॥ 'आ' इति ग्राह्योऽप्यस्ति आङ्रूप्योऽप्यस्ति ङकारानुबन्धकः। उभयमपि प्रयोगे आरूपमेव गृह्यते। तत्र विवेकमाह 'वाक्यस्मरण—' इत्यादि। वाक्यमिति—पूर्वप्रक्रान्तस्य वाक्यार्थस्य अन्यथात्वद्योतनम् इति कैयटः। आ एवं नु मन्यसे इत्युदाहरणम्, नैवं पूर्वमसंस्था इति तस्याशयः। स्मरणं विस्मृतस्य स्मृतिः। आ एवं किल तत् इति सम्प्रति स्मरामि पूर्वं तु विस्मृतमासीत्॥

## १०४। ओत् ॥१॥ १।१५॥

**दी—। ओदन्तो निपातः प्रगृह्यः स्यात्। अहो ईशाः।**

A निपात ending in ओ is प्रगृह्य। Thus अहो &c. with प्रकृतिभाव।

मित—। 'निपातः' इत्यस्ति। निपातस्यैव संज्ञा। 'ओत्' इति संज्ञाविधौ कारणम्। तेनैव लिङ्गेन विधेः प्रवृत्तिः। तत् "येन विधिः—" इति तदन्तविधिः। तदाह 'ओदन्तो निपातः' इति।

## १०५। सम्बुद्धौ शाकल्यस्येतावनार्षे ॥१।१।१६॥

**दी—। सम्बुद्धि-निमित्तक ओकारो वा प्रगृह्यः अवैदिके इतौ परे। विष्णो इति—विष्ण इति (?)—विष्णविति। 'अनार्षे' इति किम्? ब्रह्मबन्धवित्यब्रवीत्।**

An ओ due to सम्बुद्धि (vocative singular) is प्रगृह्य according to Sakalya when a non-vedic इति follows. Thus after Sakalya विष्णो इति with प्रकृतिभाव। Others have no प्रगृह्य here and allow सन्धि leading to विष्णविति where again Sakalya drops व and obtains विष्ण इति। Why say अनार्षे? Witness ब्रह्मबन्धो इति in the Vedas yielding ब्रह्मबन्धविति without प्रकृतिभाव।

मित—। 'निपातः' इति न सम्बध्यते। 'ओत्' इत्यस्ति। तस्यैव संज्ञाविधिः। ओत् ओकारः। ओकारः प्रगृह्यः। किम्भूत ओकार प्रगृह्यः? सम्बुद्धौ य

ओकारः 'सम्बुद्धिनिमित्तक ओकारः'। एष तु शाकल्यस्य मतेन प्रगृह्यः अन्येषां न प्रगृह्यः। तदाह 'वा प्रगृह्यः' इति॥ उदाहरणे शाकल्यस्य विष्णो इति इत्येकमेव रूपम्। अन्येषां स्वरसन्धिः। अत्र 'विष्ण इति' इति चिन्त्यम्। एतच्च "लोपः शाकल्यस्य" इति व लोपेन सिद्धम्। परमिह सम्बुद्धिविषये शाकल्यस्य प्रकृतिभावात् वकार एव नास्ति कुतस्तस्य लोपः? तत् 'विष्णो इति—विष्णविति' इत्येव युक्तं प्रतिभाति वृत्त्यादिषु वलोपो न दृश्यते॥

१०६। उञः॥१।१।१७॥

दी—। उञ इतौ वा प्रागुक्तम्। उ इति—विति।

The particle उ ( उञ् ) is optionally प्रगृह्य when इति follows.

मित—। उञ इति षष्ठी। उञ् शब्दे ञकार अनुबन्धः। उशब्दः शेषः। स च एकाच् निपातः। तस्य "निपात एकाच्—" इति नित्ये प्रगृह्यत्वे विकल्पमाह उञ इति। 'शाकल्यस्य इतौ' इत्यनुवर्त्तते।

१०७। ऊँ॥१।१।१८॥

दी—। उञ इतौ दीर्घः अनुनासिक प्रगृह्यश्च ऊँ इत्ययमादेशो वा स्यात्। ऊँ इति—विति।

The particle उ is optionally replaced by a long nasal उकार which too is प्रगृह्य when इति follows. Thus with the आदेश we get ऊँ इति and विति without it. Altogether we get three forms out of उ इति, viz. विति with यणादेश, उ इति with प्रकृतिभाव, ऊँ इति with ऊँ and प्रकृतिभाव।

मित—। उञः इत्यस्ति। 'शाकल्यस्येतावनार्षे' इत्यनुवर्त्तते। प्रगृह्यम्' इत्यप्यस्ति। तदाह 'उञ इतौ' इत्यादि॥ पूर्वसूत्रे प्रगृह्यत्वविकल्पः। इह प्रगृह्यत्वे सति आदेशविकल्पः। तेन त्रीणि रूपाणि—( प्रगृह्यता नास्ति ) विति। ( अस्ति प्रगृह्यता ) उ इति—ऊँ इति।

१०८। मय उञो वो वा ॥ ८।३।३३॥

दी—। मयः परस्य उञो वो वा स्यादचि। किम् उक्तम्—किम्वुक्तम्। वस्य असिद्धत्वात् नानुस्वारः।

उ is optionally replaced by व when it comes after a वर्गीय consonant and is followed by a vowel. Thus in किम् उ उक्तम् the particle उ is प्रगृह्य by "निपात एकाच्—"। As such it takes no change and the only form is किमु उक्तम्। But this rule suggests the optional change of उ into व्। Thus the alternative form is किम् व् उक्तम्, i.e. किम्वुक्तम्। Here note that though किम् is a पद and a हल् follows, yet the म of किम् does not become अनुस्वार because the rule "मोऽनुस्वारः" (८।३।२३) does not apply. To this rule the व is not an accomplished fact (असिद्ध) being guided by "मय उञः—" which is subsequent to "मोऽनु—"।

मित—। मय् इति प्रत्याहारः। मयः इति पञ्चमी उञ इति षष्ठी। तदाह मयः परस्य इत्यादि॥ किमु इति किम् उ इत्येतयोः समाहारः। तत्र उ इति एकाच् निपातः। तस्य "निपात एकाच्—" इति नित्ये प्रकृतिभावे प्राप्ते 'व्' इति वैकल्पिको विकारो विधीयते॥ किम्वुक्तम् इत्यत्र किंवुक्तम् इति न भवति। हलि परे एव अनुस्वारः। इह तु "मयः उञः—" इति यो वकारः स पूर्ववर्त्तिना "मोऽनुस्वारः" इति सूत्रेण उकाररूपेणैव गृह्यते। अतो हलभावात् नानुस्वारः॥

१०९। ईदूतौ च सप्तम्यर्थे ॥१।१।१९॥

दी—। सप्तम्यर्थे पर्य्यवसन्नम् ईदूदन्तं प्रगृह्यं स्यात्। सोमो गौरी अधि श्रितः। मामकी तनू इयि। "सुपां सुलुक्—" (३५६१—७।१।३९) इति सप्तम्या लुक्। 'अर्थ'—ग्रहणं किम्? वृत्तौ अर्थान्तरोपसंक्रान्ते मा भूत्। वाप्यामश्वो वाप्यश्वः।

A word with ई or ऊ final in it is प्रगृह्य if it ultimately acquires the sense of सप्तमी। In the example गौरी अधि is a

vedic license for गौर्य्याम् अधि, the सुप्, i.e. ङि being elided by "सुपां सु-लुक्—" etc. गौरी has thus acquired the sense of सप्तमी becomes a प्रगृह्य। Hence by प्रकृतिभाव we get गौरी अधि। Similarly मामकी तनू stands for मामक्यां तन्वाम्। तनू thus being प्रगृह्य there is प्रकृतिभाव in तनू इति। Why say सप्तम्यर्थे instead of सप्तम्याम्? In a compound a new sense being added we do not get the संज्ञा। Thus व्याप्याम् अश्वः when compounded gives वापी अश्व where वापी stands for वाप्याम् not as mere सप्तम्यन्त word but as a सप्तम्यन्तविशेषण of अश्व। With this new sense added we do not get सप्तम्यर्थ alone ; hence no संज्ञा, no प्रकृतिभाव —वाप्यश्वः।

मित—। 'शाकल्यस्य' इत्यादि निवृत्तम्। 'प्रगृह्यम्' इत्यस्ति। 'सप्तम्यर्थे' सप्तम्यर्थमात्रे 'पर्य्यवसन्नं' परिणतम्। स्वार्थव्यतिरिक्त' सप्तम्यर्थमात्रं बोधयत् इत्यर्थः। केवलयोः ईदूतोः सप्तम्यर्थे पर्य्यवसानं न दृश्यते ईत्याह 'ईदूदन्त' मिति। ईदूदन्तं शब्दस्वरूपमित्यर्थः॥ गौरी तनू इति सप्तम्या लुक्। ततो गौरी तनू इति सप्तम्यर्थे पर्य्यवसन्नम्, तत्र स्थितौ ईकारोकारौ तु न तथा, इति सार्थकं तदन्त ग्रहणम्। समुदायस्य प्रगृह्यत्वे अवयवयोरीकारोकारयोरपि प्रगृह्यता, ततः स्वरसन्धेरभावः॥ सूत्रे 'अर्थग्रहणम्' अर्थशब्दस्योच्चारणं किम्? 'वृत्तौ' समासे 'अर्थान्तरेण' सप्तम्यर्थवाह्येन अन्येन अर्थेन 'उपसंक्रान्ते' मिलिते सति प्रगृह्यसंज्ञा 'मा भूत्' इति अर्थग्रहणं कृतम्। 'वाप्याम्' इति सप्तम्यर्थमात्रे स्थितः शब्दः। 'वाप्यामश्वः' इति तु सप्तम्यर्थव्यतिरिक्तोऽपि कश्चिदश्वशब्देन संसृष्टः अर्थो गम्यते येन 'व्याप्याम्' इति अश्वशब्दस्य विशेषणं भवति। ईदृशस्थले समासे विभक्तिलोपे 'वापी अश्व' इति स्थिते केवलस्य सप्तम्यर्थस्य अभावात् पूर्वस्य प्रगृह्यता नास्ति। ततो यणादेशे 'वाप्यश्वः'॥

## ११०। अणोऽप्रगृह्यस्यानुनासिकः ।।८।।४।५७।।

दी—। अप्रगृह्यस्य अणः अवसाने अनुनासिको वा स्यात्। दधिँ—दधि। 'अप्रगृह्यस्य' किम्? अग्नी।

इत्यच्सन्धि प्रकरणम्।

अ, इ, उ, if not प्रगृह्य, become अनुनासिक optionally when at a stop. Why अप्रगृह्यस्य ? Witness अग्नी which being प्रगृह्य does not become अनुनासिक।

Here ends the section on स्वरसन्धि।

मित—। 'अण्' इति अ, इ, उ। "पूर्वेणैवाण्ग्रहाः सर्वे परेणैवेण्ग्रहा मताः। ऋतेऽणुदित् सवर्णस्येत्येक मेतत् परेण तु॥" "वावसाने" इति पूर्वसूत्र मनुवर्त्तते। तदाह 'अप्रगृह्यस्य' इत्यादि। अण् किम्? कर्त्तृ। हर्त्तृ॥ 'अच् सन्धिः' स्वरसन्धिः। स्पष्टरूपार्थे चकारस्य ककारादिकं पदान्तकार्य्यं न कृतम्। तथा च पाणिनिरपि प्रयुङ्क्ते "अल्पाच्तरम्" इति।

## अथ हल्सन्धिप्रकरणम्

### १११। स्तोः श्चुना श्चुः ॥८।४।४०॥

**दी—। सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारतवर्गौ स्तः। हरिश्शेते रामश्चिनोति। सच्चित्। शार्ङ्गिञ्जय।**

स and तवर्ग change into श and चवर्ग respectively when they come in contact with श or चवर्ग। Thus हरिस् शेते becomes हरिश् शेते ( स in contact with श ), रामस् चिनोति becomes रामश् चिनोति रामश्चिनोति ( स in contact with चु ), सत् चित् becomes सच् चित् सच्चित् ( तु in concact with चु ), शार्ङ्गिन् जय becomes शार्ङ्गिञ् जय शार्ङ्गिञ्जय ( तु in contact with चु stand for तवर्ग and चवर्ग by "अणुदित्—"। In the third example त is changed into च and in the fourth न becomes ञ, in each case the substitute being the most similar to what it replaces. Again when two letters are to be in contact either may precede the other. Also the contact may be of स and तु separately with श or चवर्ग। Thus four cases of contact arise with each of स and तु giving altogether eight cases, viz, स श, श स, स चु, चु स, तु श, श तु, तु चु, चु तु।

मित—। स् इति सकारः, श् इति शकारः। तु इति तवर्गः, चु इति चवर्गः। सूत्रे 'स्तोः' इत्यत्र स् इति षष्ठ्यन्तं लुप्तविभक्तिकं भिन्नं पदम्। तेन 'स्तोः' इति सकारस्य तोश्च इत्यर्थः। एवं 'श्चुना' इत्यत्र श् इति तृतीयान्तं लुप्तविभक्तिकं भिन्नं पदम्। श्चुना इत्यस्य शकारेण चुना च इत्यर्थः। 'श्चुः' इत्यस्य शकारः चुश्च इति॥ 'योगे' इत्यध्याहार्य्यम्। तदाह 'सकारतवर्गयोः' इत्यादि। शकारचवर्गाभ्याम्' इति सहार्थे तृतीया। शकारचवर्गाभ्यां सह योगे इत्यर्थः॥ इह 'श्चौ' इति सूत्रलाघवं परिहृत्य 'श्चुना' इति गुरुनिर्देशः कृतः। तत्र प्रयोजनं वर्णयोर्यथासम्भवं विन्यासोऽस्तु इति। 'श्चौ' इत्युक्ते "तस्मिन्निति—" इत्यनेन पूर्वयोरेव सकारतवर्गयोः आदेशः स्यात् परयोर्न स्यात्। ततो यज्न यज्ञ इत्यादि न सिध्येत्॥ "यथा-संख्यम्—" इत्यनेन 'स्तो श्चुः' इति यथासंख्यं नेयम्—सकारस्य शकारः तवर्गस्य चवर्ग इति। 'श्चुना' इति तु न तथा। सकारस्य शकारेण चवर्गेणापि योगे भवति। एवं तवर्गस्यापि। एतत्तु उत्तरत्र स्फुटीभविष्यति॥ उदाहरणेषु हरिः शेते इति "वा शरि" इति विसर्जनीयस्य सः। हरिस् शेते इति जाते अनेन श्चुत्वम्। एवं रामश्चिनोति इत्यत्रापि। तृतीये सत् चित् इति स्थिते चुत्वे सच् चित् इति। सच् इत्यत्र पदान्तश्चकारः। ततः "झलां जशोऽन्ते" इति प्राप्ते चकारस्य असिद्धत्वात् तकाररूपेणैव ग्रहणं तेन च जश्त्वे दकारः। सद् चित् इति जाते पुनश्चुत्वे सज् चित्। "खरि च" इति जकारस्य चर्त्वे सच् चित् सच्चित्। इयं नागेशस्य प्रक्रिया। अन्यथापि सिद्ध्यति लाघवञ्च भवति। तथा च—सत् चित् इति स्थिते जश्त्वे सद् चित्। चुत्वे सज् चित्। चर्त्वे सच्चित्॥

११२। शात् ॥८।४।४४॥

दी—। शात् परस्य तवर्गस्य चुत्वं न स्यात्। विश्नः। प्रश्नः।

The चवर्ग substitute is not allowed when तवर्ग follows श। Thus विश् न has तवर्ग after श, hence the न is not changed into ञ and the form is विश्नः। Similarly प्रश् न प्रश्नः। This implies that the contact of श and चु has to be taken separately with each of स and तु।

मित—। "न पदान्तात्" इत्यतः 'न' इत्यनुवर्त्तते। "तोः षि" इत्यतः 'तोः' इति च। शात् तोः न इत्यन्वयः। तदाह 'शात् परस्य' इत्यादि॥ सति सम्भवे निषेधः। तत् "स्तोः—" इत्यनेन शात् परस्य तोः अपि आदेशः प्राप्त इत्यनुमीयते। ज्ञाप्यते च 'स्तुना' इति योगो यथासंख्यं न नेय इति॥ विछ गतौ इति धातोः भावे नङ् प्रत्यये प्रथमम् अन्तरङ्गस्तुक् तस्य च चुः। ततः स्तुकस्य 'च्छ' इत्यस्य शकारादेशे विश् न विश्नः। प्रछेरपि तुकि चुत्वं ततः शकारादेशः। विशेषस्तु अस्य ङिति नङि प्राप्तं सम्प्रसारणं "प्रश्ने चासन्नकाले" इति निपातनात् न भवति॥ सूत्रमेतत् "तोः षि" इत्यतः परं पाठ्यम्, मन्ये लिपिकरप्रमादात् इहैव लिखितम्॥

## ११३। ष्टुना ष्टुः ॥८।४।४१॥

**दी—। स्तोः ष्टुना योगे ष्टुः स्यात्। रामष्षष्ठः। रामष्टीकते। पेष्टा। तट्टीका। चक्रिण्ढौकसे।**

स becomes ष and तवर्ग becomes टवर्ग when coming in contact with ष or टवर्ग। Here also the contact may be in the order स ष or षस, स टु or टुस etc. The examples are रामस् षष्ठः रामष्षष्ठः रामस् टीकते रामष्टीकते Rama goes, पेष् तृ पेष्टृ ( पेष्टा ), तद् टीका तड्टीका तट् टीका, चक्रिन् ढौकसे चक्रिण् ढौकसे are you going in, O chakrin.

मित—। इहापि ष इति लुप्तविभक्तिकं पदम्। स्तोः इत्यनुवर्त्तते। प्राग्वत् ष्टुना इति यथासम्भवं योगः ष्टुः इति तु यथासंख्यम्। रामष् षष्ठः इति सकारस्य षकारेण। रामष्टीकते इत्यत्र सकारस्य टुना। पेष्टा इत्यत्र पिष सञ्चूर्णने इत्यतः कर्त्तरि तृचि पिष् तृ पेष् तृ पेष्टृ इति प्रातिपदिकम् ततः पेष्टा इति तोः षकारेण। तस्य टीका इति समासे सुब्लुकि तद् टीका इति स्थिते टुत्वे तड् टीका चर्त्वे तट् टीका॥

## ११४। न पदान्ताट्टोरनाम् ॥८।४।४२॥

**दी—। 'अनाम्' इति लुप्तषष्ठीकं पदम्। पदान्तात् टवर्गात् परस्य अनामः स्तोः ष्टुर्न स्यात्। षट् सन्तः। षट् ते। 'पदान्तात्' किम्? ईट्टे। 'टोः' किम्? :~ ।**

अनाम् is a पद that has elided the षष्ठीविभक्ति from it. स and तु, except the तु that is in नाम् (genitive plural), do not become ष and टु if coming after a टु final in a पद। Thus षट् सन्तः with स unchanged and षट् ते with त unchanged. Why say पदान्तात्? In ईड् ते the ड is a टु but not पदान्त, hence ईड् टे with त changing into ट। Next ड becomes ट by "खरि च"—ईट्टे। Why say टोः? Because the prohibition is intended only when टु precedes and not when ष precedes. Thus सर्पिस् तम gives सर्पिष्तम् and then सर्पिष्टमम् changing त into ट।

मित—। 'टोः' इति पञ्चमी। 'पदान्तात्' इति 'टोः' इत्यस्य विशेषणम्। 'स्तोः' इत्यनुवर्त्तते। 'नाम्' इति नकारयुक्तं षष्ठीबहुवचनम्। 'अनाम्' नाम्भिन्नम्। तस्य 'अनामः लक्षणया नाम् भिन्ने स्थितस्य इत्यर्थः। 'स्तोः' इत्यस्य विशेषणमेतत्। सूत्रे तु 'अनामः' इति वक्तव्ये 'अनाम्' इति लुप्तषष्ठीकमुक्तम्। तदाह 'पदान्तात्' इत्यादि॥ 'टोः' इति किमर्थमुच्यते? षकारात् प्रतिषेधो मा भूदिति। तथाच सर्पिस् तम इति स्थिते "ह्रस्वात्तादौ—" इति षत्वे सर्पिष् तम इति। इह टुत्वं भवत्येव—सर्पिष्टमम्। ननु अत्र "स्वादिष्वसर्वनामस्थाने" इति षकारः पदान्तः। तेन "झलां जशोऽन्ते" इति तस्य जश्त्वे डकारः। ततः सर्पिड्तम इति जाते डकारस्य टुत्वमाश्रित्य इहापि प्राप्तः एव प्रतिषेधः। तत् किमुच्यते षकारात् प्रतिषेधो मा भूदिति एवमर्थं 'टोः' इति? उच्यते—"ह्रस्वात्तादौ—" इति षत्वं "पूर्वत्रा—" इति सूत्रेण जश्त्वं प्रति असिद्धम्, तेन डकारो न भवति॥ मास्तु डकारो दोषान्तरं तु प्रसज्यते। किम्? असिद्धे षकारे सकाररूपेण ग्रहणात् तस्य जश्त्वे सर्पिदतम ततः सर्पिद्दतम इत्यनिष्टं प्राप्नोति मैवम्। इह "ससजुषो रुः" इत्यपवादेन अन्तरङ्गं जश्त्वं बाधितम्। तस्यापि रुत्वस्य अपवादो "ह्रस्वात्तादौ—" इति षकारः "परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः" इति रुत्वमपि बाधित्वा प्रवर्त्तते इति सर्वमवदातम्॥

दी—। "अनाम्नवतिनगरीणामिति वाच्यम्" (वार्त्तिक)। षण्णाम्। षण्णवतिः। षण्णगर्य्यः।

We should say except the तु that is in नाम्, नवति or नगरी।

Thus षष् नाम्=षड् नाम्=षण्नाम्=षण्णाम्। षष् नवति=षड् नवति &c. षट् नगर्य्यः=षण् नगर्य्यः &c.

मित—। षण्णाम् इत्यत्र षष् नाम् इति स्थिते जश्त्वेन षड् नाम्। "प्रत्यये भाषायां नित्यम्" इति वर्गपञ्चमे षण्नाम्। ततः टवर्गादुत्तरस्य नाम्स्थितनकारस्य टवर्गः। षड्धिका नवतिः इति विग्रहे षष् नवति इति स्थिते जश्त्वादिकं प्राग्वत्। वर्गपञ्चमस्तु इह वैकल्पिकः, तेन षड् णवतिः इत्यपि भवति। एवं षण्णगर्य्यः षड्णगर्य्यः इत्यपि ॥

## ११५। तोः षि ॥८।४।४३।

दी—। तवर्गस्य षकारे परे न ष्टुत्वम्। सन्षष्ठः।

If ष follows, तवर्ग does not change into टवर्ग। Thus सन् षष्ठः, the sixth is an honest man, does not become सण् षष्ठः।

( ८४ )। झलां जशोऽन्ते ॥ ८।२।३९ ॥

दी—। वागीशः। चिद्रूपम्।

Already explained (See No. 84 ante), वाच् ईश gives वाक् ईश by "चोः कुः" (8. 2. 30), and then वाग् ईश ( वागीशः ) by जश्त्व। चित् रूप gives चिद्रूपम् by जश्त्व।

मित—। सूत्रं व्याख्यातं प्राक्। वाचामीश इति विग्रहे वाच् ईश इति स्थिते कुत्वे वाक् ईश, जश्त्वे वागीशः। चित् रूपमस्य इति विग्रहे जश्त्वे चिद्रूपम्।

## ११६। यरोऽनुनासिकेऽनुनासिको वा ॥८।४।४५॥

दी—। यरः पदान्तस्य अनुनासिके परे अनुनासिको वा स्यात्। एतन्मुरारिः—एतद्मुरारिः।

A nasal is optionally the substitute of a consonant other than ह if it is final in a पद and a nasal follows. The nasal most similar to द is न hence एतद् or एतन् in the example.

मित—। 'पदान्तात्', इत्यस्ति। तच्च षष्ठ्या विपरिणतं 'यरः' इत्यस्य विशेषणं भवति। तदाह 'यरः पदान्तस्य' इत्यादि। 'अनुनासिकः' वर्गपञ्चमः। एष मुरारिः इति विग्रहे एतद्, मुरारि इति स्थिते दकारस्य अन्तरतम आदेशो नकारो भवति वा॥

दी—। स्थानप्रयत्नाभ्यामन्तरतमे स्पर्शे चरितार्थो विधिरयं रेफे न प्रवर्त्तते। चतुर्मुखः।

This rule does not apply to र because the nasal substitute of र is not similar to it in the matter of *both* स्थान and प्रयत्न। In the matter of स्पर्श letters alone this double similarity is available. Hence the rule gets full scope with स्पर्श letters and therefore applies to them only. Consequently र is not changed in चतुर्मुख।

मित—। इह यो हि अनुनासिक आदेशः तेन सह स्थानी सदृशतमो भवितुमर्हति। तेनैव 'विधिश्चरितार्थः' स्यात्। रेफस्तु न तादृशः स्थानी। तस्य अनुनासिक आदेशो णकारः। तेन सह स्थानतः सदृशोऽपि रेफः प्रयत्नेन भिन्नः। तत् नैव विधेश्चरितार्थता रेफे। 'स्पर्शे' तु विषये आदेशेन सह 'स्थानेन प्रयत्नेन' च 'अन्तरतमः' सदृशतमः स्थानी भवति। स्पर्श एव विधेर्विषयः॥

दी—। "प्रत्यये भाषायां नित्यम्" ( वार्त्तिक ) तन्मात्रम्। चिन्मयम्। कथं तर्हि "मदोद्ग्राः ककुद्मन्तः" इति? यवादिगणे दकारनिपातनात्।

This is obligatory in secular writings when the अनुनासिक is in a प्रत्यय। Thus तद्मात्र always gives तन्मात्र। चित्मय always yields चिन्मय। Well then how would you defend ककुद्मन्तः in Kalidasa's "मदोद्ग्राः ककुद्मन्तः"? This is because the यवादि list reads ककुद्मान् without changing the द।

मित—। 'अनुनासिकेऽनुनासिकः' इत्यस्ति। 'यरः' इति च। 'यरः अनुनासिके प्रत्यये' परे 'भाषायां नित्यम् अनुनासिकः' आदेशो भवति। तन्मात्रमिति

परिमाणे मात्रच् प्रत्ययः। चिन्मयमिति स्वार्थे मयट्। यवादिगणे ककुद्मान् इति पाठो दृश्यते। तेन ककुन्मन्त इति न भवति ॥

## ११७। तोर्लि ॥८।४।६०॥

दी—। तवर्गस्य लकारे परे परसवर्णः स्यात्। तल्लयः। विद्वाल्ँ-लिखति। नकारस्य अनुनासिको लकारः।

When ल follows, a letter of the तवर्ग class is replaced by one homogeneous with what follows. Thus तद्लय becomes तल्लय with ल substituted for द because ल itself is homogeneons with ल। Similarly विद्वान् लिखति yields विद्वाल् लिखति with a nasal ल substituted for न—nasal, to make it as similar to न as is possible.

मित—। "अनुस्वारस्य ययि परसवर्णः" इत्यतः 'परसवर्णः' इत्यनुवर्त्तते। 'लि' इति लकारे इत्यर्थः। तदाह 'तवर्गस्य लकारे' इत्यादि॥ परस्य सवर्णः परसवर्णः। लकार इह परः। तस्य च सवर्णो लकार एव वर्णान्तरेण स्थान-प्रयत्नाभ्यां तुल्यता नास्ति इति नास्त्येव तस्य सवर्णं वर्णान्तरम्। तत् लकार एव पूर्वस्यादेश इति फलितम् ॥

## ११८। उदः स्थास्तम्भोः पूर्वस्य ॥८।४।६१॥

दी—। उदः परयोः स्थास्तम्भोः पूर्वसवर्णः स्यात्। "आदेः परस्य" (४४)। उत्थानम्। उत्तम्भनम्। अत्र अघोषस्य महाप्राणस्य सस्य तादृश एव थकारः। तस्य "झरो झरि—" (७१) इति पाक्षिको लोपः। लोपाभावपक्षे तु थकारस्यैव श्रवणम्। न तु "खरि च" (१२१) इति चर्त्वम्, चर्त्वं प्रति थकारस्य असिद्धत्वात्।

The roots स्था and स्तम्भ take the सवर्ण of the preceding when they come after the prefix उद्। By the rule "आदेः—" this change affects the first letter of स्था and स्तम्भ। Thus उद् स्थान=उत्स्थान=उत्थ्थान &c. Here the स has to become a सवर्ण of the तवर्ग that precedes it. Of the तवर्ग letters again थ is the

most similar to स because both of them are non-resonant and spend much breath, thence थ is substituted. The थ here optionally elides by "झरो—"। Eliding we get उत्थानम् &c. If no elision the थ stands unchanged; "खरि च" does not change it into त because the थ having come here by a later rule, "खरि च" does not recognise it and takes it as स ( असिद्ध ) by "पूर्वत्रासिद्धम्"।

मित—। 'उदः' इति पञ्चमी। "तस्मादित्युत्तरस्य" इति परस्य कार्यं विधिः। तदाह 'उदः परयोः' इति पूर्वस्य अव्यवहितपूर्ववर्णस्य यः सवर्णः स स्यात्। दकारस्य य सवर्णः तवर्ग इति यावत् स आदेशः स्यादित्यर्थः। कस्य आदेशः? परभूतयोः स्थास्तम्भोः। 'परस्य' आदेशः तस्य 'आदेः' वर्णस्य भवति। तत् सकारस्यायं आदेशः। "स्थानेऽन्तरतमः" इति तवर्गे सकारस्य अन्तरतमो यो वर्णः स आदेशः स्यात्। स तु थकारः; उभावपि सकारथकारौ अघोषौ महाप्राणौ च। एवम् उद् स्थान इति स्थिते चर्त्वे उत्स्थान, थकारे उत्थ्यान इति। इह "झरो झरि—" इति प्रथम थकारस्य वैकल्पिको लोपः। लुप्ते उत्थान=उत्थानम् इति रूपम्। एवम् उत्तम्भनम्। 'लोपाभावे' थकारे परे पूर्वसकारस्य तकारो न भवति, "खरि च" इति तु पूर्ववर्त्ति सूत्रं थकारस्य परवर्त्तिना "उदः—" इति सूत्रेण लब्धम्। पूर्वं प्रति परमसिद्धमिति असिद्ध स्थकारः। सकार एव स न थकारः। सकारः पुनः स्वयमेव चर्, तत् तंप्रति चर्त्वे न प्रवर्त्तते। तेन उत्थ्यानम् इति पाक्षिकं रूपम्। एवम् उत्थ्मभनम् इति च॥

## ११९। झयो होऽन्यतरस्याम्॥८।४।६२॥

दी—। झयः परस्य हस्य पूर्वसवर्णो वा स्यात्। घोषवतो नादवतो महाप्राणस्य संवृतकण्ठस्य हस्य तादृशो वर्गचतुर्थ एवादेशः। वाग्घरिः—वाग्हरिः।

ह coming after a स्पर्शवर्ण, except the fifth of a वर्ग, optionally changes into the corresponding सवर्ण of the letter preceding. The आदेश here is the fourth letter of the वर्ग because that is the

most similar to ह which in its pronunciation has sound, resonance much loss of breath and a contracted throat. Thus starting with वाच् हरि we get वाक्हरि by कुत्व, next वाग् हरि by जश्त्व। In this ह becomes optionally घ, hence &c.

मित—। 'सवर्णः' इत्यनुवर्त्तते 'पूर्वस्य' इति चास्ति। झर् इत्यपञ्चमः स्पर्शवर्णः। 'झरः' इति पञ्चमी। गम्यमानपरशब्दयोगे पञ्चमी। 'हः' इति षष्ठ्यन्तः स्थानी। 'पूर्वस्य सवर्णः' आदेशः। तदाह 'झयः परस्य' इत्यादि। वाचा वाचि वा हरिः सिंह इव इति विग्रहे वाच् हरि इति स्थिते कुत्वे वाक् हरि जश्त्वे वाग् हरि। ततो हकारस्य गकारसवर्णे आदेशे कर्त्तव्ये स्थानसाम्यात् कखघाः सर्वएव प्राप्ताः। परं घोषादिभिश्चतुर्भिस्तुल्यो घकार एव। स एवादेशः॥

### १२०। शश्छोऽटि ॥८।४।६३॥

दी—। पदान्तात् झयः परस्य शस्य छो वा स्यात् अटि। दस्य चुत्वेन जकारे कृते—

When श comes after a झय् which is पदान्त, it optionally becomes छ if अट् follows. (Compounding स शिवः we get तद् शिव। Now) by "स्तोः—" changing द into the corresponding चवर्ग which is ज we have तज् शिव and then—

मित—। 'झयः' इत्यस्ति तच्च पञ्चम्यन्तम्। "वा पदान्तस्य" इत्यतः 'पदान्तस्य' इत्यनुवर्त्तते पञ्चम्या च विपरिणम्यते। ततो 'झयः' इत्यस्य विशेषणं भवति। 'अन्यतरस्याम्' इति चास्ति। 'श' इति षष्ठ्यन्तं स्थानी। 'छः' इत्यादेशः तदाह 'पदान्तात् झयः' इत्यादि। अट् इति प्रत्याहारः। स शिवः इति समासे तद् शिव इति स्थिते "स्तोः—" इति दस्य चुत्वे तज् शिव इति। शेषमग्रे।

### १२१। खरि च ॥८।४।५५॥

दी—। खरि झलां चरः स्युः इति जकारस्य चकारः। तच्छिवः—तच्शिवः।

A झल् becomes a चर् when खर् follows. This changes the ज into च in तज् शिव and we have तच् शिव। Now with the optional change of श into छ we have तच् छिवः and तच शिवः।

मित—। "झलां जशः—" इत्यतो 'झलाम्' इत्यनुवर्त्तते। "अभ्यासे चर् च" इत्यतः 'चर्' इति च। 'झलाम्' इति स्थानी 'चर्' इत्यादेशः। तदाह 'खरि झलाम्' इत्यादि। उदाहरणे तज् शिव इत्यत्र अनेन 'जकारस्य चकारः'। तच् शिव इति जाते शकारस्य छत्व विकल्पः॥ इह तु नागेशेन प्रथममेव जकारः कृतः। प्रथमं शस्य छत्वे कृतेऽपि तदेव रूपम्। तथा च—तद् शिव इत्यत्र छत्वे तद् छिव (८।४।६३)। दकारस्य श्चुत्वे कर्त्तव्ये छस्य असिद्धत्वे शकार एव सः। तेन चुत्व-प्रवृत्तिः (८।४।४०)। ततः तज् छिव इति जाते जकारस्य चत्वें कर्त्तव्ये छकारस्य असिद्धत्वात् शकाररूपेण ग्रहणम्। शकारोऽपि खर् तेन चर्त्वम्। सिद्धञ्च तच् छिवः इति॥

दी—। "छत्वममीति वाच्यम्" (वार्त्तिक)। तच्छ्लोकेन—तच् श्लोकेन। अमि किम्? वाक् श्चोतति।

It should be said that the change into छ takes place when अम् follows and not restricted to अट् only. Thus तद् श्लोक also changes श optionally. Why अमि? Witness वाक् श्चोतति which does not change श because the following letter च is beyond the range अम्।

मित—। सूत्रे 'अटि' इति स्वल्पमुच्यते। 'अमि' इति वक्तव्यम्। तेन लकारे परेऽपि छत्वविकल्पः।

१२२। मोऽनुस्वारः ॥८।३।२३॥

दी—। मान्तस्य पदस्य अनुस्वारः स्यात् हलि। "अलोऽन्तस्य" (४२)। हरिं वन्दे। 'पदस्य' इति किम्? गम्यते।

A पद ending in म will take अनुस्वार when a हल् follows. By "अलोऽन्त्यस्य" the final letter, i. e., म becomes अनुस्वार। Thus

हरिम् वन्दे = हरिं वन्दे। Why पदस्य ? Witness गम्यते where गम् is not a पद and म does not change.

मित। 'पदस्य' इत्यधिकृतम्। पदस्य स्थाने इत्यर्थः। पदमिति स्थानी। 'मः' इति षष्ठ्यन्तं विशेषणं 'पदस्य' इत्यस्य। तदन्तविधिना 'मान्तस्य पदस्य' इति लभ्यते। 'अनुस्वारः' आदेशः। न हि 'मान्तस्य पदस्य' स्थाने किन्तु "अलोऽन्त्यस्य"। तेन पदान्तस्य मकारस्य अनुस्वारः आदेश इत्यायातम्। अन्यथाप्ययमर्थो लभ्यते— 'मः' इति स्थानषष्ठी। मकारः स्थानी। उत्तरसूत्रे अपदान्तस्य मकारस्य विशिष्य वचनात् इह पदान्तो मकारः। एवम् पदान्तस्य मकारस्य अनुस्वार इति स एवार्थः। पूर्वसूत्रात् 'हलि' इत्यनुवर्त्तते॥

## १२३। नश्चापदान्तस्य झलि ॥८।३।२४॥

**दी—। नस्य मस्य च अपदान्तस्य झलि अनुस्वारः। यशांसि। आक्रंस्यते। झलि किम् ? मन्यते।**

अनुस्वार is the substitute of both न and म when they are not पदान्त and a झल् follows. Thus यशास् इ = यशान्स् इ = यशांसि ; आक्रम् स्यते = आक्रंस्यते। Why say झलि ? Witness मन् य ते = मन्यते without changing न into अनुस्वार because य is not a झल्।

मित—। 'नः' इति षष्ठी। चकारेण 'मः' इति पूर्वसूत्रात् अनुकृष्यते। 'अनुस्वार' इत्यनुवर्त्तते। तदाह 'नस्य मस्य च' इत्यादि॥ यशस् जस् इति स्थिते "जश्शसोः शिः" इति शि' आदेशे यशस् शि = यशस् इ। "नपुंसकस्य झलचः" इति नुमि यशन्स् इ। "सान्तमहतः" इति दीर्घे यशान्स् इ = यशांसि। आक्रंस्यते इत्यत्र "आङ उद्गमने" इत्यात्मनेपदम्। लृटि आक्रम् स्यते इति जाते अनुस्वारः।

## १२४। अनुस्वारस्य ययि परसवर्णः ॥८।४।५८॥

**दी—। स्पष्टम्। अङ्कितः। अञ्चितः। कुण्ठितः। शान्तः। गुम्फितः। 'कुर्वन्ति' इत्यत्र णत्वे प्राप्ते तस्य असिद्धत्वात् अनुस्वारे परसवर्णे च कृते तस्य असिद्धात् न णत्वम्।**

The sense is clear—When यय् follows, an अनुस्वार becomes the corresponding सवर्ण of the following letter. Thus अंकित becomes अङ्कित &c. In कुर्वन्ति we expect ण by "रषाभ्याम्—" with the form कुर्वण्ति। But then the ण is असिद्ध to the rule "नश्चापदान्तस्य—"। This rule sees न here and changes it into अनुस्वार and yields कुर्वंति। "अनुस्वारस्य ययि—" now operates and gives कुर्वन्ति। To this form "रषाभ्यां" does not apply because the न is no longer natural but brought in by "अनुस्वारस्य—"। Thus being असिद्ध to "रषाभ्यां—" that rule sees न here and does not operate.

मित—। 'परसवर्णः' इत्यत्र 'पर' इति लुप्तषष्ठीकं पृथक् पदम्। 'परस्य सवर्णः' इति वाच्ये विभक्तिलोपः सौत्रः। 'कुर्वन्ति' इत्यत्र "रषाभ्याम्—" इति णत्वं प्राप्तम्। "नश्चापदान्तस्य—" इत्येतत् प्रति तत् असिद्धम् इति तेन अनुस्वारः। "अनुस्वारस्य ययि—" इति तकारस्य सवर्णे नकारे कृते भूयोऽपि 'कुर्वन्ति' इत्येव रूपम्। एतत् प्रति तु "रषाभ्याम्—" इति न प्रवर्तते। परशास्त्रेण कृतोऽयं नकारः "रषाभ्याम्—" इति पूर्वशास्त्रं प्रत्यसिद्धः। एतदेवोक्तमनुस्वारीभूतो णत्वमतिक्रामतीति॥

## १२५। वा पदान्तस्य ॥८।४।५९॥

दी—। पदान्तस्य अनुस्वारस्य ययि परे परसवर्णो वा स्यात्। त्वङ्करोषि—त्वं करोषि। सयँ्यन्ता—संयन्ता। सवँ्वत्सरः—संवत्सरः। यलँ्लोकम्—यं लोकम्। अत्रानुस्वारस्य पक्षे अनुनासिका यवलाः।

अनुस्वार final in a पद becomes optional by the सवर्ण of the letter following it that is a यय्। Thus त्वङ्करोषि &c. In संयन्ता the अनुस्वार has to be optionally the सवर्ण of य। But सवर्ण of य is य itself and no other. This य has to be nasal to have some similarity with the अनुस्वार। Hence optionally सयँ्यन्ता or संयन्ता। Similarly the other two also. In these the alternatives are nasal य, व and ल।

मित—। पूर्वसूत्रेण मिलितोऽन्वयः। तदाह पदान्तस्य अनुस्वारस्य इत्यादि। सय्ँयन्ता इत्यादि पक्षे 'अनुस्वारस्य अनुनासिका यवलाः' तेनैव यथा कथञ्चित् अनुस्वारेण तुल्यता भवति।

## १२६। मो राजि समः क्वौ॥८।३।२५॥

दी—। क्विबन्ते राजतौ परे समो मस्य म एव स्यात्। सम्राट्।

The root राज with क्विप् attached following सम्, the म of सम् will remain as म। Thus सम् राज् क्विप्=सम्राट्।

मित—। "मोऽनुस्वारः" इत्यतः 'मः' इति षष्ठ्यन्तमनुवर्त्तते। तच्च स्थानि। सूत्रे 'मः' इति प्रथमान्तम् आदेशः। मिलिते हे मकारस्य मकारः स्यात् इत्यर्थः गमयतः। कस्य मकारस्य? 'समः' मकारस्य। कदा? 'राजि' राजधातौ परे किम् अविशेषेण? न इत्याह 'क्वौ' क्विपि परे। तदाह 'क्विबन्ते राजतौ' इत्यादि। मकारः प्रकृत्या तिष्ठति अनुस्वारो न भवति इति फलितम्।

## २२७। हे मपरे वा॥८।३।२६॥

दी—। मपरे हकारे परे मस्य म एव स्याद्वा। 'ह्मल् ह्वल् चलने'। किम् ह्मलयति—किंह्मलयति।

If ह follows and after it comes another म then the preceding म optionally stands as म। Thus in किम् ह्मलयति—what is it that quakes, the म of किम् either stands unchanged or becomes अनुस्वार। ह्मल and ह्वल are two roots meaning चलन moving.

मित—। 'मो मः' मकारस्य मः स्यात् इत्यस्ति। 'मः परो' यस्मात् तादृशे 'हे' हकारे परे। 'वा' इति पक्षे मभावात् मुक्ते अनुस्वारः।

दी—। "यवलपरे यवला वेति वक्तव्यम्" (वार्त्तिक)।

If however य, व or ल follows the ह the आदेश is य, व, or ल optionally.

मित—। 'यवलपरे' हकारे 'यवला वा' भवन्ति पूर्वस्य मकारस्य। कदा यकारः कदा वकारः कदा वा लकार आदेश इत्याकाङ्क्षायां व्यवस्थामाह—

१२८। यथासंख्यमनुदेशः समानाम् ॥१।३।१०॥

दी—। समसम्बन्धी विधिर्यथासंख्यं स्यात्। कियँ ह्यः—किंह्यः। किवँ ह्वलयति—किंह्वलयति। किलँ ह्लादयति—किं ह्लादयति।

In any injunction if a certain set of words is followed by others of an equal number the constituents of the different sets are to be taken as related in the order of enumeration. In the Varttika above the set य व ल is followed by the set यवल। Here य goes with य, व with व and ल with ल। The substitutes are nasal, किम् ह्यः, किम् ह्वलयति &c. are the original forms, the substitutes, are यँ, वँ, लँ।

मित—। अनु पश्चात् देशनमुच्चारणम् अनुदेशः विधिभाजो निर्देशात् परं विधेर्वा विधिनिमित्तस्य वा निर्देशः॥ 'समानां' समसंख्यकानाम्॥ संख्या संख्यानम् उच्चारणम्। संख्यामनतिक्रम्य उच्चारणक्रममाश्रित्य इति 'यथासंख्यम्'। समानामनुदेशो यथासंख्यं भवति इति वेदितव्यम्। कांश्चित् शब्दान् निर्दिश्य यदा तत्सम्बद्धा समसंख्यका अपरे शब्दा निर्दिश्यन्ते तदा ते पूर्वैः सह यथाक्रमं सम्बद्धाः प्रथमेन प्रथमः द्वितीयेन द्वितीय इत्यादि क्रमेण सम्बद्धा इत्यर्थः। एतदेव भङ्ग्यन्तरेण आह 'समसम्बन्धी' इत्यादिना॥ एतेन यपरे यकारः वपरे वकारः लपरे लकार आदेश इति फलितम्। किञ्च मकारस्य आदेश इत्यनुनासिक आदेशाः। नागेशस्तु निरनुनासिकाः शुद्धा आदेशा इति मन्यते॥ किम् ह्यः इति स्थिते यकारे कियँ ह्यः, अनुस्वारे किं ह्यः इत्यादि॥

१२९। नपरे नः ॥८।३।२७॥

दी—। नपरे हकारे मस्य नः स्याद्वा। किन् ह्नुते—किं ह्नुते।

If ह is followed by न the preceding म becomes optionally

न। Thus किम् ह्नुते yields किन् ह्नुते with the substitute न and किं ह्नुते with अनुस्वार।

मित—। 'म.' इति षष्ठ्यन्तं 'ह्रे वा' इति अनुवर्त्तते। तदयमन्वयः—नपरे ह्रे मः नः वा। किन् ह्नुते इति स्थिते मस्य नः—किन् ह्नुते ?। पक्षे अनुस्वारः—किं ह्नुते।

## १४०। ङ्णोः कुक्टुक् शरि ॥८।३।२८॥

दी—। ङकारणकारयोः कुक्टुकौ आगमौ वा स्तः शरि। कुक्टुकोरसिद्धत्वात् जश्त्वं न।

When शर् follows, कुक् and टुक् are optionally the augments of ङ and ण respectively if final in a पद। In प्राङ् षष्ठः—the sixth comes first—the ङ् takes कुक्। उ and क are elided leaving क्। This is placed *after* ङ् by "आद्यन्तौ टकितौ"। We have then प्राङ्क् षष्ठः। क is now at the end of a पद, hence "झलां जशोऽन्ते" ought to change it into ग। But कुक् and टुक् are by a rule which comes after "झलां—", hence कुक् and टुक् are असिद्ध with respect to "झलां—"। Because they are असिद्ध we cannot have जश्त्व।

मित—। 'वा' इति वर्त्तते। 'ङ्णोः' इति षष्ठी। 'कुक्' इत्यत्र ककार इत्, उकार उच्चारणार्थः। कित्त्वसामर्थ्यात् आगमौ कुक्टुकौ न आदेशौ। तदाह—'ङकारणकारयोः' इत्यादि। "आद्यन्तौ" इत्यनेन अन्तावयवौ च तौ। किञ्च यथासंख्यतया अन्तरतमतया वा ङकारस्य कुक् णकारस्य टुक्॥ इह 'पदस्य' इत्यधिकृतमस्ति तेन पदान्तयो ङकारणकारयोरित्यर्थो लभ्यते। ततश्च अन्तावयवतया कुकः ककारः टुकश्च टकारः पदान्तः। तथा सति "झलां—" इति तयोर्जश्त्वं प्राप्तम्। तत्राह 'कुक्टुकोरसिद्धत्वाज्जश्त्वं न' इति। "झलां—" इति पूर्वं "ङ्णोः—" इति च परं सूत्रम्। पूर्वं प्रति च परमसिद्धम्। तेन "झलां—" इति सूत्रसिद्ध ककारं वा टकारं वा न पश्यति कुतो जश्त्वेन गकारो डकारो वा ? ङकारणकारौ तु न झल् तेन तयोरपि जश्त्वं न।

दी—। "चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्" (वार्त्तिक)। प्राङ्ख् षष्ठः—प्राङ्क् षष्ठः—प्राङ्षष्ठः। सुगण्ट् षष्ठः—सुगण्ठ् षष्ठः—सुगण् षष्ठः।

Prof. Paushkarasadi wants the first letter of a वर्ग to change into the seond when श, ष or स follows. Hence in प्राङ्क् षष्ठः, as above, क becomes ख and the form is प्राङ्ख् षष्ठः। Other Professors would have प्राङ्क् षष्ठः without the change. Without कुक् the form is प्राङ् षष्ठः। Similarly with टुक् we have सुगण्ठ षष्ठः after Paushkarasadi and सुगण्ट् षष्ठः after others; also सुगण् षष्ठः without टुक्।

मित—। 'चय्' इति वर्गप्रथमाः। 'चयः' इति षष्ठी। वर्गप्रथमानां वर्गे द्वितीया भवन्ति पौष्करसादेराचार्य्यस्य मतेन शरि परे। अन्यस्य तु न। तेन विकल्पः। पदान्ते अपदान्ते च विधिः॥

१११। डः सि धुट्॥८।३।२९॥

दी—। डात् परस्य सस्य धुट् वा स्यात्। षट्त्सन्तः—षट् सन्तः।

स coming after ड् final in a पद will optionally take the augment धुट्। ट elides also उ। ध् remains. This is prefixed to स by "आद्यन्तौ—"। Starting with षड् सन्तः—six wise men—we prefix ध्। This gives षड् ध्सन्तः=षड् त्सन्तः by "खरि च"। Next षट् त्सन्तः by the same. Without धुट् we have षट् सन्तः।

मित—। 'डः' इति पञ्चमी। तेन "तस्मादित्युत्तरस्य" इति परवर्त्तिनः सकारस्य विधिः। तत् 'सि' इति षष्ठ्यर्थे सप्तमी बोध्या। तदाह 'डात् परस्य सस्य' इत्यादि। 'वा' इत्यस्ति। 'पदस्य' इत्यधिकारः तेन पदान्तात् डकारात् पदादेः सकारस्य विधिः। धुट् इत्यागमः सकारस्य आदिः। षड् सन्तः इति स्थिते षड् ध्सन्तः। इह डकारः पदान्तः। तत् "न पदान्तात्—" इति धकारस्य टुत्वं न भवति। "खरि च" इति धकारस्य चर्त्वे षड्त्सन्तः। पुनर्डकारस्य चर्त्वे षट् त्सन्तः। अत्र सकारे परे तकारस्य पाक्षिकस्थकारो न भवति। "चयो द्वितीया—"

इति "नादिन्याक्रोशे—" (८।४।४८) इत्यत्रत्यं वार्त्तिकम्। थकारस्य तकारस्तु "खरि च" (८।४।५५) इत्यनेन परवर्त्तिना। एवं थकारे कर्त्तव्ये असिद्धस्तकारः तेन न थकारः। हरदत्तस्तु वार्त्तिकं प्रति असिद्धता नास्ति इति मत्वा पक्षे थकारमप्याह॥

१३२। नश्च ॥८।३।३०॥

दी—। नकारान्तात् सस्य धुट् वा स्यात्। सन् त्सः—सन् सः।

स coming after न final in a पद will optionally take the augment धुट्। In the example ध्सः becomes त्सः as before.

मित—। 'सि धुट्' इत्यस्ति 'वा' इति च।

१३३। शि तुक् ॥८।३।३१॥

दी—। पदान्तस्य नस्य शे परे तुक् वा स्यात्। "शश्छोऽटि" (१२०—८।४।६३) इति छत्वविकल्पः। पक्षे "झरो झरि—" (७१) इति च लोपः। सञ् छम्भुः—सञ्च् छम्भुः—सञ्च् शम्भुः—सञ् शम्भुः।

अछौ अचछा अचशा अशाविति चतुष्टयम्।
रूपाणामिह तुक्-छत्व-च लोपानां विकल्पनात् ॥

न final in a पद takes the augment तुक् optionally if श follows. This gives न्त्श with तुक् and न् श without it. The last becomes ञ्श by "स्तोः—" (8.4. 40). By the same the first changes into न् च् श and then into ञ्च्श। Again श becomes छ optionally by "शश्छो—"। Hence ञ्श alternates with ञ्छ and ञ् च् श with ञ् च् छ—four forms altogether. The last admits of the optional elision of च by "झरो—", but that merely reproduces the second form above. Thus through the optionality of तुक्, छत्व and चलोप we have here the four forms ञ्छ, ञ् च् छ, ञ् च् श, ञ्श।

मित—। 'नः' इत्यनुवर्त्तते। तच्च इह षष्ठ्या विपरिणतम्। 'पदस्य' इत्यधिकारः। 'नः' इति षष्ठ्यन्तं तस्य विशेषणम्। तेन तदन्तविधिना 'नान्तस्य पदस्य' इति प्राप्तम्। 'तुक्' इत्यागमः। 'नान्तस्य पदस्य तुक्' इत्युक्ते नकारात् परस्तुक् भवति।

'पदान्तस्य नस्य तुक्' इत्युक्तोऽपि तथैव ॥ सन् शम्भुः इति स्थिते प्रकृते तुकि नकारस्य चुत्वे सञ् शम्भुः। शकारस्य छत्वे सञ् छम्भुः। तुकि कृते सन्त् शम्भुः इति जातम्। तकारस्य चुत्वे सन्च् शम्भुः इति। ततो नकारस्यापि चुत्वे सञ्च् शम्भुः। शकारस्य छत्वे सञ्च् छम्भुः इति। इह चतुर्थे "झरो झरि—" इति चकारस्य पाक्षिके लोपे सञ् छम्भुः इति पूर्वोक्तमेव द्वितीयं रूपम्। एतावता 'इह तुक्छत्व-चलोपानां विकल्पनात् रूपाणां चतुष्टयम्'। किं तदित्याह—'ञछौ' इति पूर्वोक्तं द्वितीयं रूपम्, 'ञ्च्छाः' इति पूर्वोक्तं चतुर्थम्, 'ञचशाः' इति पूर्वोक्तं तृतीयम्, 'ञशौ' इति पूर्वोक्तं प्रथमम् ॥

## १३४। ङमो ह्रस्वादचि ङमुण् नित्यम् ॥८।३।३२॥

दी—। ह्रस्वात् परो यो ङम् तदन्तं यत् पदं तस्मात् परस्य अचो नित्यं ङमुडागमः स्यात्। प्रत्यङ्ङात्मा। सुगण्णीशः। सन्नच्युतः।

A vowel, coming after ङम् which is final in a पद and is preceded by a short vowel, always takes the prefix ङमुट्। Here ङम् is a प्रत्याहार standing for ङ, ण, न। ङमुट् is the same with उ and ट added as इत्। It is thus made टित् to show that it is a prefix and not a suffix. Also the आदेश and the स्थानी have to be taken in order, hence ङ goes with ङ, ण with ण, न with न। Thus प्रत्यङ् आत्मा gives प्रत्यङ् ङात्मा, सुगण् ईशः becomes सुगण् णीशः, सन् अच्युतः yields सन् नच्युतः।

मित—। 'ङमः' इति पञ्चमी। 'ह्रस्वात्' इति गम्यमानपरशब्दयोगे पञ्चमी। ह्रस्वात् परो यो ङम् तस्मात् इत्यर्थः। 'पदस्य' इत्यधिकृतमिह पञ्चम्या विपरिणतम्। 'ङमः' इति तस्य विशेषणं तेन च तदन्तविधिः। ह्रस्वात् परो यो ङम् तदन्तात् पदात् इत्यर्थः। इयन्तु पञ्चमी परवर्त्तिनी विधिं द्योतयति "तस्मादित्युत्तरस्य" इति। तत् 'अचि' परे 'ङमुट् इत्यस्य 'परवर्त्तिनः अचो ङमुट्' इत्यर्थः। एतेन 'अचि' इति षष्ठ्यर्थे सप्तमी। "हे मपरे वा" इत्यतः अनुवृत्तं 'वा' इति इह न सम्बध्यते इति द्योतयितुमाह 'नित्यम्' इति ॥ ङमुट् इत्यत्र टकार इत्, उकार उच्चारणार्थः। तेन 'ङम्' इत्यादेशः। ङम् च प्रत्याहारेण ङकारणकारनकाराणां ग्रहणम्।

'ङमो ङम्' इति यथासंख्य' नेयम्। ङकारात् ङकार:, णकारात् णकार: नकारात् नकार इति, टित्वात् अच आदि: ॥ प्रत्यञ्चतीति प्रत्यङ्। प्रत्यङ् आत्मा इति स्थिते आकारस्य ङकारागमे प्रत्यङ् ङात्मा। सुष्ठु गणयति सुगण् इति विच् प्रत्यये न क्विपि। सुगण् ईश: इति स्थिते णकारागमे सुगण्णीश:। एवं सन्नच्युत:। एषु प्रथमो ङम् पूर्वपदान्त: द्वितीयस्तु परपदादि: इति द्रष्टव्यम् ॥

१३५। समः सुटि ॥८।३।५॥

दी—। समो रुः स्यात् सुटि। "अलोऽन्तस्य" (४२)।

The Upasarga सम् takes the augment रु when सुट् follows. The रु replaces म of सम् by "अलोऽन्त्यस्य"। सुट् is the augment of the root कृ when सम् precedes. सम्यक् करोति in the sense 'adorns' takes तृच् and then we have सम् कृ तृच्। With सुट् added to कृ this becomes सम् स्कृ तृच्। Now रु elides उ leaving र्। Substitutng this for the म of सम् we get सर् स्कृ तृच्।

मित—। "मतुवसो रु—" इत्यतो 'रु:' इत्यनुवर्त्तते। 'सम:' इति षष्ठी स्थानी 'रु:' इत्यादेश:। 'सुट्' इति कृधातोरागम:। तस्मिन् परे सम् इत्युपसर्गस्य रुः इत्यादेश: स्यात्। "अलोऽन्त्यस्य" इति समो मकारस्यायमादेश:। उकार इत् 'र्' इति स्थिति:। तृचि सम् कृ तृच् इति स्थिते "सम्परिभ्यां करोतौ भूषणे" इति सुटि तत: अनेन रुत्वे सर् स्कृ तृ इति जाते—

१३६। अत्रानुनासिकः पूर्वस्य तु वा ॥८।३।२॥

दी—। अत्र रुप्रकरणे रो: पूर्वस्य अनुनासिको वा स्यात्।

In this section on रु the letter that precedes रु optionally becomes nasal. Here the letter preceding रु is the अ in स। Hence we get optionally सँर् स्कृ तृ। As regards the other form let us see—

मित—। 'अत्र' अस्मिन् "मतुवसो रु—" इति प्रक्रान्ते रु-प्रकरणे। यत्तु "ससजुषो रु:" इति प्राक्गतं प्रकरणं द्वितीयेऽध्याये तत्र न। 'पूर्वस्य' इति रो:

पूर्वस्य। 'तु' इति भेदं दर्शयति—रुविधिर्नित्यः रोः पूर्वस्य तु वैकल्पिकः॥ इह रोः पूर्वः सकारस्थः अकारः। तस्य वैकल्पिके अनुनासिके कृते सँर् स्क त्वच् इति जातम्। यद्ययं वैकल्पिकः, पक्षे पुनः किं भवति इत्याह।

## १३७। अनुनासिकात् परोऽनुस्वारः ॥८।३।४॥

दी—। अनुनासिकं विहाय रोः पूर्वस्मात् परः अनुस्वारागमः स्यात्। "खरवसानयोर्विसर्जनीयः"।

Avoiding the nasal we get the augment अनुस्वार after what precedes रु। This gives the alternative सं र् स्क त्वच्। In both these the र् becomes विसर्ग by "खरव—"। Hence the result—सँः स्क त्वच्—संःस्क त्वच्। Next—

मित—। 'अनुनासिकात्' अनुनासिकं विहाय अनुनासिकपक्षं परित्यज्य पक्षान्तरे इत्यर्थः 'अनुस्वारः' क्रियते। कस्य स्थाने अनुस्वारः? नह्ययं कस्यचित् स्थाने किन्तु आगम एष 'रोः पूर्वस्मात्' अकारात् 'परो' भवति। एतेन सँर् स्क त्वच्—संर् स्क त्वच् इति पक्षद्वये जाते उभयत्र "खरव—" इति रकारस्य विसर्गः। ततः प्राप्तं सँः स्क त्वच्—संः स्क त्वच् इति। शेषमर्थं।

## १३८। विसर्जनीयस्य सः ॥८।३।३४॥

दी—। खरि विसर्जनीयस्य सः स्यात्। एतदपवादेन "वा शरि" (१२१—८।३।३६) इति पाक्षिके विसर्गे प्राप्ते "संपुंकानां सो वक्तव्यः" (वार्त्तिक)। सँस्स्कर्ता—संस्स्कर्ता।

विसर्ग becomes स when a खर् follows. In modification of this by "वा शरि" the विसर्ग optionally becomes स or stands unaltered when शर् follows. But special provision is made for सम् by "सं पुं—" which directs स always for the विसर्ग of सम्। Hence सँः स्क त्वच्—सं: स्क त्वच् become सँस्स्कर्ता—संस् स्कर्ता।

मित—। इह व्याख्यातारः "खरवसानयोः—" इत्यतः खर्मात्रमनुवर्त्तयन्ति नावसानमपि। तच्च मण्डूकप्लुत्या इह सम्बध्यते। तदाह 'खरि' इति। तेन

उदाहरणे विसर्गस्य नित्यं सकारः प्राप्तः। इतः पुनः "वा शरि" इति वैकल्पिकं सकारं शास्ति। समाधिमाह "सं पुं—" इति। सम् पुम् कान् इत्येतेषां विसर्गस्य नित्यं सः। एतेन सँस स्कर्ता—संस्स्कर्ता इति रूपद्वयम्। ननु 'सस्क' इत्यत्र 'सस्' इति संयोगे सकार आदिः। परतश्च ककारो झल्। तत् "स्कोः संयोगाद्योः—" (८।२।२९) इति सकारलोपे 'स्क' इत्येव भवतु। मैवम्। "स्कोः—" इत्येतत् प्रति असिद्धः प्रथमः सकारः। तेन न लोपः॥

दी—। "समो वा लोपमेके" इति भाष्यम्। लोपस्यापि रुप्रकरणस्थत्वात् अनुस्वारानुनासिकाभ्याम् एकसकारं रूपद्वयम्।

The Bhashya remarks that some want the elision of the म of सम्। The elision again, as it occurs in the section on रु, brings in the अनुस्वार and the अनुनासिक। Hence we get the two forms सँस्कर्त्ता and संस्कर्त्ता with only one स।

मित—। 'एके' अन्ये। 'इच्छन्ति' इति पूरणीयम्। "मलोऽन्त्यस्य" इति समो मकारस्य लोपः। लोपोऽयं रुप्रकरणे विहितः। तत्र च अनुस्वारानुनासिकौ अधिकृतौ। तत् सत्यपि लोपे पर्य्यायेण तौ भवतः। तेन सँस्कर्त्ता—संस्कर्त्ता इति 'एकसकारं रूपद्वयम्'॥

दी—। द्विसकारं तु उक्तमेव। तत्र "अनचि च" इति सकारस्य द्वित्वपक्षे त्रिसकारमपि रूपद्वयम्। अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमानाम् अकारोपरि शर्षु च पाठस्य उपसंख्यातत्वेन अनुस्वारस्यापि अच्त्वात्।

The two forms with a double स have already been noticed. In them the स may be optionally doubled by "अनचि च" and two additional forms obtained with a treble स। This is because the अनुस्वार is counted as a vowel for the भाष्य wants to read अनुस्वार, विसर्ग, जिह्वामूलीय, उपध्मानीय and यम after अ and also among the शर् in the Siva-sutras. Hence we get सँसस्स्कर्त्ता—संसस्स्कर्त्ता with a treble स।

मित—। 'उक्तमेव' लोपाभावे कृते इत्यर्थः। 'तत्र' द्विसकारकरूपद्वये। 'त्रिसकारम्' सँस्, संस् इत्येतयोः सँस्स्, संस्स् इति सति। ननु "अनचि च" इति अचः परस्यैव यरः द्वित्वं शास्ति संस् इत्यत्र तु न अचः परः सकारः, तत् कथं द्वित्वम्? अत्र अनुस्वारादीनां शिवसूत्रेषु अकारात् परं पाठः शर्षु च पुनः पाठः अङ्गीकृतः। तेन अनुस्वारः लक्ष्यदृष्ट्या क्वचित् अच् क्वचिच्च हल्। इह अजिति गृह्यताम्।

दी—। अनुनासिकवतां त्रयाणां "शरः खयः" (वार्त्तिक) इति कद्वित्वे षट्।

The three forms with the nasal optionally duplicate the क by the Varttika "शरः खयः" which means that खय् letters are optionally doubled when coming after a शर्। Here क comes after स, hence the duplication. This gives three additional forms with a double क—altogether six forms. This is true also of forms with an अनुस्वार।

मित—। 'त्रयाणाम्' एकसकारद्विसकारत्रिसकारवतामिति शेषः। वार्त्तिके 'शरः' इति पञ्चमी 'खयः' इति षष्ठी। 'वा' इति वर्त्तते। शर उत्तरस्य खयः द्वे वा स्तः इत्यर्थः। शर् इति शषसाः, खय इति वर्गप्रथमद्वितीयाः। तेनेह सकारात् ककारस्य द्वित्वविकल्पः। एकककारं द्विककारञ्च रूपद्वयम्। सकारस्यापि प्रागुक्तैरेकत्वादिभिः 'षट्' रूपाणि।

दी—। अनुस्वारवतामनुस्वारस्यापि द्वित्वे द्वादश।

The three forms with अनुस्वार yield six through reduplication of क as before and then twelve altogether if अनुस्वार too is doubled by "अनचि च" (48) the अनुस्वार being a शर् which is a variety of यर्।

मित—। 'अनुस्वारस्यापि' इति ककारस्य अनुस्वारस्य च इत्यर्थः। 'अनुस्वारवतां' प्राग्वत् ककारस्य द्वित्वे षट् रूपाणि। विशेषस्तु अनुस्वारस्य शर्षु पाठात्,

इह च अनुस्वारात् परम् अजभावात्, "अनचि च" इत्यनुस्वारस्य वैकल्पिकं द्वित्वं भवति। तेन द्वादश रूपाणि। साकल्येन च द्वयोः पक्षयोरष्टादश भेदाः।

दी—। एषामष्टादशानां तकारस्य द्वित्वे, वचनान्तरेण पुनर्द्वित्वे च, एकतं द्वितं त्रितमिति चतुःपञ्चाशत्।

Of these 18 forms if the त is doubled optionally by "अचो रहाभ्याम्—", then these with a single त yield another 18 with a double त। Now the Varttika "यणो मयो—" (54) is also explained as—मय् after यण् is doubled optionally. Here after र which is a यण् we have त which is a मय्। Hence doubling this त we get 18 others with a treble त। Altogether 54 forms.

मित—। "अचो रहाभ्याम्—" इति 'तकारस्य द्वित्वे'। "यणो मयो—" इति 'वचनान्तरेण'। वार्त्तिकमेतत् "संयोगान्तस्य लोपः" (५४) इत्यत्र यण इति षष्ठी मय इति पञ्चमी इति पक्षे यणो द्वित्वपरतया व्याख्यातम्। व्याख्यानान्तरञ्च यण इति पञ्चमी मय इति षष्ठी इत्यस्ति। तदपि प्रामाणिकमेव। तस्मिन् पक्षे द्वितकाररूपे प्रथमस्तकारः यणः परः। अनेन तस्य पाक्षिके द्वित्वे त्रितकारकं रूपमापद्यते। एतावता समेतानि 'चतुःपञ्चाशत्' रूपाणि।

दी—। अणोऽनुनासिकत्वे अष्टोत्तरं शतम्।

Lastly the अण् at the end (i. e., the आ in ता, त्ता, त्त्ता) may be optionally nasal by "अणोऽप्रगृह्यस्य—" (११०)। Thus in all there are 108 different forms.

मित—। "अणोऽप्रगृह्यस्य—" इति आकारस्य पाक्षिकमनुनासिकत्वम्। एतेन संस्कर्त्ता—संस्कर्त्ताँ इत्यादीनि अष्टोत्तरशतानि रूपानि भवन्ति।

१३९। पुमः खय्यम्परे ॥८।३।६॥

दी—। अम्परे खयि पुम्शब्दस्य रुः स्यात्। व्युत्पत्तिपक्षे "—अ-प्रत्ययस्य" इति षत्वपर्युदासात् ≍क ≍पयोः प्राप्तौ, अव्युत्पत्तिपक्षे

तु षत्वप्राप्तौ, "संपुंकानाम्—" इति सः। पुँस्कोकिलः—पुंस्कोकिलः। पुँस्पुत्रः—पुंस्पुत्रः। 'अम्परे' किम्? पुंक्षीरम्। 'खयि' किम्? पुंदासः।

पुम् takes रु when a खय् letter preceding an अम् letter follows. पुम् is the word पुम्स् with the स elided. पुमान् कोकिलः if compounded gives पुम्स् कोकिल। The स elides leaving पुम् कोकिल। Substituting रु for म we get पुर् कोकिल=पुँः कोकिल—पुंः कोकिल as before. Now पुम्स् is sometimes treated as a primitive word sometimes as a derivative. If a derivative then the विसर्ग here is in a प्रत्यय and is therefore excluded from the operation of the rule "इदुदुपधस्य चाप्रत्ययस्य"। Hence there is no ष and ⌣क comes in by "कुप्वोः ⌣क ⌣पौ च"। If a primitive then the same rule directs ष। Both these are barred by "संपुंकानां—" which substitutes स for विसर्ग। Hence पुंस्कोकिलः &c. Why say अम्परे? Witness पुंक्षीरम् where क is followed by ष which is not an अम् and we do not get रु &c. Why खयि? Witness पुंदासः where द is not a खय् and there is no रु।

मित—। 'पुम्' इति लुप्तसकारः पुम्स्शब्दः। 'अम्' इति प्रत्याहारः। अम् परो यस्मात् 'अम्परः'। तादृशे 'खयि' परे। 'रु' इत्यनुवर्त्तते। 'पुमान् कोकिलः' इति समासे 'पुम्स् कोकिल' इति स्थिते "संयोगान्तस्य लोपः" इति सलोपे 'पुम् कोकिल"। रुत्वे अनुस्वारानुनासिकाभ्यां पुँर् कोकिल—पुंर् कोकिल। "खरव-सानयोः—" इति विसर्जनीये पुँः कोकिल—पुंः कोकिल। इह पुंधातोर्डुम्सुन् प्रत्यये पुम्स् इत्येकः पक्षः—'व्युत्पत्तिपक्षः'। तत्र विसर्गोऽयं प्रत्ययजातः। तथा सति "इदुदुपधस्य चाप्रत्ययस्य" इति षत्वात् पर्य्युदस्तोऽयं विसर्गः। तेन ⌣क ⌣पौ प्राप्तौ। परन्तु "संपुंकानाम्—" इति ⌣क ⌣पौ बाधित्वा सकारं विधत्ते। ततश्च पुँस्कोकिलः—पुंस्कोकिलः इति रूपद्वयम्॥ पक्षान्तरे पुम्स् इत्यव्युत्पन्नं प्रातिपदिकम्—'अव्युत्पत्तिपक्षः'। तत्र 'पुँः कोकिल' इत्यत्र "इदुदुपधस्य—" इति षत्वे प्राप्ते "संपुं—" इति सः। पुँस्कोकिलः इति रूपम्। 'पुंः कोकिल' इत्यत्र तु अनुस्वारेण व्यवधानात् उदुपधत्वं नास्ति। तेन न षः। ⌣क इति

प्राप्तः। तदभ् वाधित्व सः, 'पुंस्कोकिलः' इति रूपम् ॥ पुंसः पुत्रः इति समासे पुँस्पुत्रः—पुंस्पुत्रः।

दी—। "ख्याञादेशे न" ( वार्त्तिक ) पुंख्यानम्।

There is no रु when ख्याञ् the substitute of चक्ष follows. Thus पुंसः ख्यानम् when compounded gives पुंख्यानम्।

मित—। "चक्षिङः ख्याञ्" इति चक्षधातोरार्द्धधातुके ख्याञादेशः। ल्युटि च ख्यानमिति रूपम्। पुंसः ख्यानमिति समासे पुम् ख्यान इति स्थिते प्राप्तं रुत्वादिकं प्रतिषिध्यते।

१४०। नश्छव्यप्रशान् ॥८।३।७॥

दी—। अम्परे छवि नकारान्तस्य पदस्य रुः स्यात्। न तु प्रशान्-शब्दस्य। विसर्गः। सत्वम्। श्चुत्वम्। शार्ङ्गिँश्छिन्धि—शार्ङ्गिंश्छिन्धि। चक्रिँस्त्रायस्व—चक्रिंस्त्रायस्व। 'पदस्य' किम्? हन्ति। 'अम्परे' किम्? सन् त्सरुः। त्सरुः खड्गमुष्टिः। 'अप्रशान्' किम्? प्रशान् तनोति।

A पद ending in न except प्रशान् takes रु when a छव् letter follows with an अम् letter coming after it. In शार्ङ्गिन् छिन्धि first the न becomes रु ( र् ), then र् becomes विसर्ग, next the विसर्ग becomes स, lastly the स becomes श। Also these changes follow along two different lines starting with रु, viz, the nasal line and the अनुनासिक line. Here the final forms are शार्ङ्गिँश् छिन्धि and शार्ङ्गिंश् छिन्धि। Similarly चक्रिंस् त्रायस्व &c. Why पदस्य? Witness हन्ति where though त followed by अम् comes after न् we have no change because हन् is not a पद। Why अम्परे? Witness सन् त्सरुः—a good grip of the sword—without change because स is not अम्। The grip of a sword is called त्सरु। Why अप्रशान्? Witness प्रशान् तनोति without change though the conditions are there.

मित—। 'अम्परे' इत्यनुवर्त्तते। 'रुः' इत्यस्ति। 'पदस्य' इत्यधिकृतम्। 'नः' इति तस्य विशेषणम्। तेन तदन्तविधिः। 'नकारान्तस्य पदस्य' इत्यर्थे 'नः पदस्य' इति। 'अप्रशान्' इति षष्ठ्यर्थे प्रथमा। न प्रशान् शब्दस्य इत्यर्थः॥ शाङ्गिंन् छिन्धि इति स्थिते नस्य रुः। अनुस्वारानुनासिकाभ्यां पक्षद्वयम्। उभयत्र "खरवसान—" इति रोर्विसर्गः। "विसर्जनीयस्य सः" इति विसर्गस्य सः। "स्तोः श्चुना" इति सस्य शः॥ प्रशाम्यतीति क्विपि "अनुनासिकस्य क्विझलोः—" इत्युपधा-दीर्घः। "मो नो धातोः" इति मकारस्य नकारः। तेन प्रशान् इति प्रातिपदिकम्। तस्य च प्रथमैकवचने प्रशान् इति पदम्। "नलोपः प्रातिपदिकान्तस्य" (८।२।७) इत्येतत् प्रति "मो नो—" (८।२।६४) इत्यस्य असिद्धत्वात् नलोपो न भवति॥

१४१। नॄन् पे॥८।३।१०॥

दी—'नॄन्' इत्यस्य रुः स्याद्वा पकारे परे।

The word नॄन् optionally takes रु when प follows. In नॄन् पाहि with रु and the nasal and अनुनासिक we have नॄँर् पाहि—नॄंर् पाहि। Nex र changes into विसर्ग and then—

मित—। 'नॄन्' इति नृशब्दस्य शसि रूपस्य अनुकरणम्। लुप्तषष्ठीकमेतत् तदाह 'नॄन् इत्यस्य' इति। "उभयथर्क्षु" इत्यतः 'उभयथा' इत्यनुवर्त्तते, तेन रुत्व-विकल्पः। तदाह 'रुः स्याद्वा' इति। नॄन् पाहि इत्यत्र रुत्वे अनुनासिकानुस्वारा-भ्याञ्च नॄँर् पाहि—नॄंर् पाहि इति। रस्य "खरवसान—" इति विसर्गे नॄँः पाहि—नॄंः पाहि इति। ततो "विसर्जनीयस्य सः" इति प्राप्ते।

१४२। कुप्वोः ≍क ≍पौ च॥८।३।३७॥

दी—। कवर्गे पवर्गे च परे विसर्जनीयस्य क्रमात् जिह्वामूलीयोपध्मा-नीयौ स्तः। चात् विसर्गः। नॄँ ≍ पाहि—नॄं ≍ पाहि—नॄँः पाहि—नॄंः पाहि—नॄन् पाहि।

विसर्जनीय becomes जिह्वामूलीय when कवर्ग follows and उपध्मानीय when पवर्ग follows, or optionally it remains as विसर्ग by virtue

of the च in the rule. Both जिह्वामूलीय and उपध्मानीय have the common form ⌅ resembling half a विसर्ग। The क and प are attached to facilitate pronunciation and also to indicate the character whether the उच्चारणस्थान is to be that of कवर्ग or पवर्ग। In the examples विसर्ग becoming उपध्मानीय we have नॄँ ⌅ पाहि—नॄं ⌅ पाहि। If it stands as विसर्ग we get नॄँ: पाहि—नॄं: पाहि। रु itself being optional we have नॄन् पाहि without रु। Hence altogether there are five forms.

मित—। 'कु' इति कवर्गः 'पु' इति पवर्गः। 'कुप्वोः' इति सप्तमी। 'कवर्गे पवर्गे च परे' इत्यर्थः। 'विसर्जनीयस्य' इति स्थानी अनुवर्त्तते। '⌅ क' '⌅ प' इत्येतयोः अर्द्धविसर्गसदृशो वर्णः ककारात् प्राक् जिह्वामूलीयः, पकारात् उपध्मानीयः। उभयोरेकमेव रूपम्। उच्चारणार्थं विवेकार्थञ्च ककारपकारयोरनुषङ्गः। ककारे जिह्वामूलीयः पकारे उपध्मानीय इति। 'क्रमात्' इति यथासंख्यम्। कवर्गे परे जिह्वामूलीयः पवर्गे च उपध्मानीयः इत्यर्थः। 'चात् विसर्गः' सूत्रे चकारग्रहणात् 'विसर्जनीयः' इत्यस्य समुच्चय इत्यर्थः। एवमिह विसर्जनीयस्य कवर्गे परे जिह्वामूलीयो वा विसर्जनीयो वा, पवर्गे उपध्मानीयो वा विसर्जनीयो वा इत्यादेशव्यवस्था। उदाहरणयोः उपध्मानीये नॄँ ⌅ पाहि—नॄं ⌅ पाहि इति, विसर्गपक्षे नॄँ: पाहि—नॄं: पाहि इति रूपाणि। रुत्वाभावे नॄन् पाहि॥ इह मुद्रितेषु पुस्तकेषु उदाहरणानि अनुक्त्वा एव "येन नाप्राप्ते" इत्यादि विचारोऽवतारितः। उदाहरणविषये प्रसङ्ग एव तस्य। उदाहरणानां परमेव तत् युज्यते। मन्ये लिपिकरप्रमादकृतोऽयं विपर्य्यासः॥

दो—। "येन नाप्राप्ते"—न्यायेन "विसर्जनीयस्य सः" इत्यस्यापवादोऽयम्, न तु "शर्परे विसर्जनीयः" इत्यस्य। तेन "वासः क्षौमम्" इत्यादौ विसर्ग एव।

By the maxim "येन नाप्राप्ते—" (Only what inevitably presents itself is barred by a special rule) this rule bars the rule "विसर्जनीयस्य सः" and not "शर्परे—"। Hence we have विसर्ग in वासः क्षौमम् &c.

मित—। "येन नाप्राप्ते" इति न्यायस्य मुखम्। न्यायस्तु "येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधकः" इति। अयमर्थः—प्राप्तं प्राप्तिः उपस्थितिः। भावे क्तः। अप्राप्तम् अप्राप्तिः। न अप्राप्तम् नाप्राप्तम् नियतोपस्थितिः। नञ्‌द्वयं प्रकृतार्थं द्रढ़यति। 'येन नाप्राप्ते' यस्य नियतोपस्थितौ सत्यां 'यो विधिरारभ्यते स' विधिः 'तस्य' नियतोपस्थितस्य एव 'बाधको' भवति नान्यस्य। 'येन' इति अनुक्ते कर्त्तरि तृतीया। "न लोक—" इति षष्ठी निषेधः। अक्षते "कुप्वोः—" इति सूत्रे कखयोः पफयोश्च परतः "विसर्जनीयस्य सः" इति सकारो दुर्वारः। तेनात्र "विसर्जनीयस्य—" इति सूत्रम् अवश्यं प्राप्तम्। कृते तु सूत्रे तस्य बाधः। "शर्परे विसर्जनीयः" इति तु केवलयोः कुप्वोः न प्राप्नोति, तत् तस्य बाधो न भवति। 'तेन वासः क्षौममित्यादौ' "शर्परे" इत्यनेन 'विसर्ग एव'। कृतेपि जिह्वामूलीयादौ तस्य "शर्परे—" इत्येतत् प्रति असिद्धत्वात् पुनरपि विसर्गो भवति इतीह 'एव' शब्दस्यार्थः।

## १४१। कानाम्रेडिते ॥८।३।१२॥

**दी—। कान्नकारस्य रुः स्यात् आम्रेडिते परे। "संपुंकानाम्—" (वार्त्तिक) इति सः। यद्वा—**

The न of कान् becomes रु when its duplicate follows. Thus in कान् कान् we get कार् कान्। With nasal and अनुस्वार we have काँर कान्—कांर कान्। Next by "खवर—" काः कान्—कांः कान्। The rule "विसर्जनीयस्य सः" now applies but is barred by "कुप्वोः—" which again is set aside by "संपुंकानाम—"। Thus the final forms are काँस्कान्—कांस्कान्। Or we may say that the स here is got by—

मित—। 'कान्' इति किम्शब्दस्य शसि रूपस्यानुकरणं लुप्तषष्ठीकं पदम्। रुः इत्यस्ति। 'आम्रेडित' कृतद्वित्वस्य द्वितीयाङ्गम्। तस्मिन्परे रुः। "अलोऽन्त्यस्य" इति 'नकारस्य रुः'। कान् कान् इति वीप्सायां द्विर्वचनम्। रुत्वादिषु कृतेषु काँः कान् कांः कान् इति जाते "कुप्वोः—" इति जिह्वामूलीयः प्राप्तः। तदपवादेन "संपुंकानाम्—" इति सः। अथवा सकारार्थं कस्कादिषु पाठः करिष्यते॥

१४४। कस्कादिषु च ॥८।३।४८॥

दी—। ≍क≍पयोरपवादः। एषु इण उत्तरस्य विसर्गस्य षः स्यात्, अन्यस्य तु सः। काँस्कान्—कांस्कान्। कस्कः। कौतस्कुतः। सर्पिष्कुण्डिका। धनुष्कपालम्। आकृतिगणोऽयम्।

In words listed under the कस्कादि class the विसर्ग is seen changed into ष after इण् letter, into स after other letters. This bars जिह्वामूलीय, उपध्मानीय and विसर्जनीय। Thus supposing कान् कान् to be of this class we get काँस्कान् and कांस्कान्। Similarly कौतस्कुत:, सर्पिष्कुण्डिका &c. कस्कादि is an unclosed list the constituents to be gathered from usage.

मित—। 'कुप्वोः' इत्यस्ति 'विसर्जनीयस्य सः' इति च। 'कस्कः' इत्येवमादिषु शब्देषु कुप्वोः परयोः विसर्जनीयस्य सत्वं भवति। किमविशेषेण सः? नेत्याह 'इण उत्तरस्य षः अन्यस्य सः' इति॥ यत रुत्वे कृते विसर्गसत्वानुनासिकानुस्वाराभ्यां द्वैरूप्यम्। काँस्कान्—कांस्कान्। 'कुतः कुतः', सर्पिः कुण्डिका, धनुः कपाल इत्यादिषु तु स्वाभाविकात् सकाराज्जातो विसर्गः न तु रुत्वात्। तेन एकमेव निरनुनासिकं रूपम्॥ कुतः कुतः आगत इत्यर्थे अण्। सम्प्रधारणाविषये स्वार्थे द्विर्वचनम् इति कैयटः। कर्मधारयवद्भावः॥ आकृत्या प्रयुक्तेन स्वरूपेण गण्यते आकृतिगणः कर्मणि घञ्। प्रयोगतो विज्ञेय इत्यर्थः॥

१४५। संहितायाम् ॥६।१।७२॥

दी—। इत्यधिकृत्य—

Having taken up the word संहितायाम् as pervading the entire section—

मित—। अधिकारसूत्रमेतत्। अतःपरं संहिताधिकार इत्यर्थः।

१४६। छे च ॥ ६।१।७३॥

दी—। ह्रस्वस्य छे परे तुगागमः स्यात् संहितायाम्। चुत्वस्य असिद्धत्वात् जश्त्वेन दः। ततश्चत्वस्य असिद्धत्वात् पूर्वं चुत्वेन जः। तस्य

चत्वेन चः। चुत्वस्य असिद्धत्वात् 'चोः कुः' (३७८) इति कुत्वं न। स्वच्छया। शिवच्छाया।

In the matter of euphonic combination, a short vowel takes the augment तुक् when छ follows. compounding स्वस्य छाया we get स्व छाया। The अ in स्व being a short vowel takes तुक् which drops उ and क। This gives स्वत् छाया। Here two rules present themselves—(1) त being पदान्त it should become द by "झलां—"; (2) In contact with छ it ought to become च by "स्तोः—"। The च being the result of a subsequent rule would be असिद्ध even if allowed. Hence it is avoided. The result then is स्वद् छाया। Here again two rules come in—(i) द should be ज by "स्तोः—"; (ii) द should be त by "खरि च"। The त is avoided because असिद्ध। The form now is स्वज् छाया। Finally ज becomes च by "खरि च" yielding स्वच्छाया। Similarly शिवच्छाया। The च here cannot become क because the rule "चोः कुः" does not apply, the चवर्ग being असिद्ध with respect to that rule.

मित—। 'ह्रस्वस्य तुक्' इति वर्त्तते। 'संहितायाम्' इत्यधिकारः। तदाह 'ह्रस्वस्य' इत्यादि॥ स्वस्य छाया इति समासे स्व छाया इति स्थिते तुक्। कित्त्वात् अन्तावयवः। स्वत् छाया इति जाते तकारस्य जश्त्वेन दकारः चुत्वेन च चकारः प्राप्तः। परेण सूत्रेण चकारः पूर्वेण तु दकारः। तत् दकारं प्रति चकारः असिद्धः। कृतेऽपि अकृतेऽपि चकारे दकारः प्रवर्त्तते। तत् चकारं परित्यज्य दकार एव क्रियताम्। एतेन स्वदछाया इति स्थितम्। इहापि द्वौ पक्षौ दकारस्य जकारः क्रियतां तकारो वा। तकारस्य असिद्धत्वात् जकारः क्रियते। स्वज् छाया इति च भवति। ततो जकारस्य चकारे स्वच्छाया। स्वक्छाया इति तु न भवति। परसूत्रेण कृतश्चवर्गः "चोः कुः" इत्येतत् प्रति असिद्धः। असति चवर्गे कवर्गोऽपि नास्ति॥

१४७। आङ्माङोश्च ॥६।१।७४॥

दो—। एतयोश्छे परे तुक् स्यात्। "पदान्ताद्वा" (१४६) इति विकल्पापवादः। आच्छादयति। माच्छिदत्।

आङ् and माङ् take the augment तुक् when छ follows. This is obligatory and modifies the optional तुक् enjoined by "पदान्ताद्वा।"

मित—। 'तुक्' अनुवर्त्तते 'छे' इति च। 'आङ्माङोः' इति षष्ठ्या स्थानिनिर्देशः। 'आङ्' इति अर्थविशेषे ङित्। "ईषदर्थे क्रियायोगे मर्य्यादाभिविधौ च यः। एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्॥" 'माङ्' इति लुङो निमित्तं ङित्। अङितोरेतयोः "पदान्ताद्वा" इति विकल्पः। आ छिन्नं किल तत्—आच्छिन्नं किल तत्। माछिनत्तु—माच्छिनत्तु।

## १४८। दीर्घात्॥६।१।७५॥

दी—। दीर्घात् छे परे तुक् स्यात्। दीर्घस्यायं तुक् न तु ह्रस्य, "—सेनासुराच्छाया—" इति ज्ञापकात्। चेच्छिद्यते।

There is तुक् when छ follows a long vowel. The तुक् is the augment of the long vowel not of छ as is indicated by "—सेना सुरा च्छाया—" (828) of Panini himself. Thus चे छिद्यते gives चेत् छिद्यते = चेच्छिद्यते।

मित—। 'छे तुक्' इत्यस्ति। 'दीर्घात्' इति गम्यमानपरशब्दयोगे पञ्चमी। दीर्घात् यः छः तस्मिन् इत्यन्वयः। कस्य तुक् इत्याकाङ्क्षायामाह 'दीर्घस्यायं तुक्' इत्यादि। कथं ज्ञायते दीर्घस्य तुक् न छस्य इति तत्राह—सूत्रकारेण तु "विभाषा सेना—" (८२८) इति सूत्रे 'सुराछाया' इति स्थिते सुराच्छाया' इति छकारात् प्राक् दीर्घस्य आकारस्य तुक् कृतः॥ पुनः पुनश्छिनत्ति इति छिद यङ् ते इति स्थिते क्रमात् छिद छिद यङ् ते छि छिद य ते चि छिद्यते चे छिद्यते इति प्राप्ते चे इत्यतः परमनेन तुकि चेत् छिद्यते—चेच्छिद्यते॥

## १४९। पदान्ताद्वा॥६।१।७६॥

दी—। दीर्घात् पदान्तात् छे परे तुक् वा स्यात्। लक्ष्मीच्छाया—लक्ष्मीछाया।

तुक् is optional when छ follows a long vowel final in a पद।

मित—। 'छे तुक्' इत्यस्ति। 'दीर्घात्' इत्यनुवर्त्तते। दीर्घात् पदान्तात् परः यः छः तस्मिन् सति तस्यैव पदान्तस्य तुक् इति प्राग्वदन्वयः।

इति हल्सन्धिप्रकरणम्

## अथ विसर्गसन्धिप्रकरणम्।

दी—। "विसर्जनीयस्य सः" (१३८)। विष्णुस्त्राता।

Explained already. Here it is only a reminder.

मित—। विष्णुः त्राता इत्यत्र सत्वे विष्णुस्त्राता।

### १५०। शर्परे विसर्जनीयः ॥८।३।३५॥

दी—। शर्परे खरि विसर्जनीयस्य विसर्जनीयः न तु अन्यत्। कः त्सरुः। घनाघनः क्षोभणः। इह यथायथं सत्वं जिह्वामलीयश्च न।

If however the खर् is followed by a शर् the विसर्जनीय stands unchanged as विसर्जनीय without becoming anything else. Thus in कः त्सरुः there is स after त, hence the विसर्जनीय does not become स। Similarly in घनाघनः क्षोभणः there is ष after क, hence no जिह्वामूलीय though expected by "कुप्वोः—"।

मित—। 'खरि' इत्यस्ति 'विसर्जनीयस्य' इति च। किम्भूते खरि इत्याह शर् परो यस्मात् तादृशे खरि। 'अन्यत्' किं प्राप्तमिति दर्शयति कः त्सरुः इत्यत्र सत्वं प्राप्तं 'न तु' भवति। घनाघन क्षोभणः इत्यत्र जिह्वामूलीयः प्राप्तः सोऽपि न भवति।

### १५१। वा शरि ॥८।३।३६॥

दी—। शरि परे विसर्जनीयस्य विसर्जनीय एव वा स्यात्। हरिः शेते—हरिश्शेते।

But when शर् follows the विसर्जनीय optionally becomes विसर्जनीय। Thus in हरिः शेते we have हरिः शेते when the विसर्जनीय

remains unchanged. This being optional we have the alternative हरिस् श्ते by "विसर्जनीयस्य सः" (138). Next changing स into श by "स्तोः—" we have हरिश् श्ते।

मित—। 'विसर्जनीयस्य विसर्जनीयः' इत्यस्ति। 'शर्परे' इति न सम्बध्यते, तदाह 'शरि परे' इत्यादि। विसर्जनीये हरिःश्ते। पक्षे सत्वे हरिस् श्ते, श्चुत्वे हरिश् श्ते।

**दी—। "खर्परे शरि वा विसर्गलोपो वक्तव्यः" ( वार्त्तिक )। राम स्थाता—रामःस्थाता। हरि स्कुरति—हरिः स्कुरति। पक्षे विसर्गे सत्वे च वैरूप्यम्।**

The विसर्ग elides optionally if the शर् that follows is itself followed by a खर्। In रामः स्थाता the थ that follows स is a खर्, hence eliding the विसर्ग we get राम स्थाता। Without elision the form is रामः स्थाता on which "वा शरि" operates yielding रामः स्थाता with विसर्ग and रामस् स्थाता with स—three forms altogether. Similarly in हरिः स्फुरति।

मित—। खर् परो यस्मात् स 'खर्परः'। तादृशे शरि परे विसर्गस्य पाक्षिको लोपः। 'रामः स्थाता' इति स्थिते विसर्गलोपे 'रामस्थाता'। लोपाभावे "वा शरि" इति विसर्जनीये 'रामः स्थाता' पक्षे "विसर्जनीयस्य सः" इति 'रामस् स्थाता' इति त्रीणि रूपाणि। त्रीण्येव रूपाणि इति ध्यङ् स्वार्थे वैरूप्यम्। एवं 'हरिः स्फुरति' इत्यत्रापि।

**दी—। "कुप्वोः ≍क ≍पौ च" ( १४२ )। क ≍ करोति—कः करोति। क ≍ खनति—कः खनति। क ≍ पचति=कः पचति। कः फलति=कः फलति।**

Already explained. Here it is only a reminder—that what follows is on कुप्वोः।

मित—। व्याख्यातं प्राक्। अत्र तु स्मरणार्थो पुनरुक्तिः कुप्वोः प्रकरणं वर्त्तते इति।

१५२। सोऽपदादौ ।८।३।३८।

दो—। विसर्जनीयस्य सः स्यादपदाद्योः कुप्वोः परयोः। पाश-कल्पककाम्येषु इति वाच्यम् (?)। पयस्पाशम्। यशस्कल्पम्। यशस्कम्। यशस्काम्यति।

विसर्ग becomes स when कवर्ग or पवर्ग follows but does not lead in a पद। This applies to the affixes पाश, कल्प, क, काम्य। Thus पयः पाशम् पयस्पाशम् foul water ; यशः कल्पप् यशस्कल्पम् almost a name ; यशः क यशस्कम् ; यशः काम्यच् तिप् यशस्काम्य तिप् यशस्काम्यति।

मित—। 'विसर्जनीयस्य' इति 'कुप्वोः' इति च अस्ति। 'अपदादौ' इति 'कुप्वोः' इत्यस्य विशेषणम्। 'अपदाद्योः' इति द्विवचने कर्तव्ये एकवचनं सौत्रम्। मुद्रितेषु पुस्तकेषु 'पाशकल्पककाम्येषु' इति वार्त्तिकरूपेण उपस्थापितम्। वस्तुतस्तु प्रस्तुतस्य सूत्रस्य विवरणमात्रमेतत् न वार्त्तिकम्। वृत्तिकृता 'पाशकल्पककाम्येषु' इत्येतन्मात्रमेवोक्तम्। तत्र टीकाकृद्भिर्विवृतं 'सम्भवप्रदर्शनमेतत् न परिगणनम्' पाशादीनि विहाय सूत्रस्य विषयो नोपलभ्यते इति च तदर्थः। परिगणनन्तु अव्याप्त्यतिव्याप्तिवारणार्थम्। सति तस्मिन् वार्त्तिकत्वं स्यात्। मन्ये 'इति वाच्यम्' इति अजानता केनचित् योजितम्॥ जिह्वामूलीयोपध्मानीयविसर्गाणामपवादः॥ कुत्सितं पयः पयस्पाशम्, ईषदूनं यशः यशस् कल्पम्, अज्ञातं यशः यशस्कम्, आत्मनो यश इच्छति यशस्काम्यति॥

दो—। "अनव्ययस्येति वाच्यम्" (वार्त्तिक)। प्रातःकल्पम्।

It has to be stated that this happens only when the विसर्ग is not in an अव्यय। Thus प्रातर् being an अव्यय, the विसर्ग derived from its र will not become स। Hence प्रातःकल्पम् etc. not प्रातस्कल्पम्।

मित—। 'अनव्ययस्य' विसर्जनीयस्य इति विशेष्यं योज्यम्। अव्यये स्थितस्य विसर्जनीयस्य "सोऽपदादौ" इति सत्वं न भवति। प्रातःकल्पम् इति स्थिते प्रातःकल्पं प्रातस्कल्पं वा॥

दी—। "काम्ये रोरेवेति वाच्यम्" (वार्त्तिक)। नेह—गीः काम्यति।

In the case of काम्य, the विसर्ग for this purpose must be one coming from रु। Thus गीः काम्यति does not change the विसर्ग into स।

मित—। 'रोः' इति शेषे षष्ठी। 'विसर्जनीयस्य' इत्यस्ति। स्थानषष्ठी चेयम्। रोः यो विसर्जनीयः तस्य स्थाने इत्यर्थः। 'सः' इति योज्यम्। काम्ये परे रोः यो विसर्जनीयः तस्य स्थाने एव स भवति नान्यविधस्य विसर्जनीयस्य॥ यशस्काम्यति इत्यत्र यशस्शब्दस्य "ससजुषो रुः" इति रुत्वे विसर्गः। गीः काम्यति इति तु गिर् इति नैसर्गिकस्य रकारस्य विसर्गः। तेन प्रथमस्य सः, न द्वितीयस्य।

१५३। इणः षः ॥८।३।३९॥

दी—। इणः परस्य विसर्गस्य षकारः स्यात् पूर्वविषये। सर्पिष्पाशम्। सर्पिष्कल्पम्। सर्पिष्कम्। सर्पिष्काम्यति।

A विसर्ग coming ofter इण् changes into ष under conditions as before, i. e., when कवर्ग or पवर्ग follows but does not lead in a पद। Hence सर्पिष्पाशम् etc. the विसर्ग coming after इ।

मित—। 'कुप्वोः' इत्यस्ति 'अपदादौ' इति च। तेन पूर्ववत् पाशबादिप्रत्ययविषये एतत् प्रवर्त्तते। तथैव उदाहरणानि॥ किञ्च 'अनव्ययस्य' 'रोरेव' इति वार्त्तिकद्वयमप्यत्र सम्बध्यते। तेन उच्चैःकल्पं गीःकाम्यति इत्यादिषु न षत्वम्॥ ननु सकार एवास्तु "इण् कोः" इति षत्वं भविष्यति, किमेतेन सूत्रेण? न भविष्यति। अपदान्तस्य मूर्द्धन्यो भवति अयं तु पदान्तः॥

१५४। नमस्पुरसोर्गत्योः ॥८।३।४०॥

दी—। गतिसंज्ञयोरनयोर्विसर्गस्य सः कुप्वोः परयोः। नमस्करोति। साक्षात्प्रभृतित्वात् कृञो योगे विभाषा गतिसंज्ञा। तदभावे नमः

करोति। "पुरोऽव्ययम्" इति नित्यं गतिसंज्ञा। पुरस्करोति। अगतित्वात् नेह—पूः पुरौ पुरः प्रवेष्टव्याः।

When नमस् and पुरस् acquire the designation गति, their विसर्ग becomes स if कवर्ग or पवर्ग follows. Thus नमस्करोति not नमः करोति or नम ≍ करोति because नमस् is a गति here. नमस् is included in the साक्षात्प्रभृति list and therefore optionally becomes गति in connection with the root कृ। In the alternative, नमस् not being a गति, we get नमः करोति। The अव्यय word पुरः is always गतिसंज्ञक, hence पुरस्करोति। पुरः when obtained by declining the word पुर् in the first case—thus पूः पुरौ पुरः—is not an अव्यय and not a गति; hence पुरः प्रवेष्टव्या not पुरस्प्रवेष्टव्याः।

मित—। 'अपदादौ' इति निवृत्तम्। 'विसर्जनीयस्य कुप्वोः सः' इत्यस्ति। तदाह 'गतिसंज्ञयोः' इत्यादि॥ साक्षात् प्रभृतिषु नमस्शब्दः पठ्यते, ततः "साक्षात् प्रभृतीनि च" इति वैकल्पिकी गतिसंज्ञा। ननु "साक्षात्प्रभृतिषु च्व्यर्थवचनम्" इति वार्त्तिकम्। नमस्करोति इत्यत्र च च्व्यर्थो नास्ति। तत् कथमुक्तोदाहरणसङ्गतिः? उच्यते—च्व्यर्थवचनन्तु वार्त्तिककारस्य न सूत्रकारस्य तेन सूत्रकारमते सङ्गतम् एवोदाहरणम्। नागेशस्तु एतदर्थं नमस्शब्दस्य ऊर्यादिषु पाठं कल्पयति तत्र मूलं मृग्यम्॥ 'अपदादौ इत्यस्य निवृत्तिं दर्शयितुं' 'करोति' इति तिङन्तमुदाहरति॥ 'पूः पुरौ' इति पुरः इत्यस्य अनव्ययत्वप्रदर्शनार्थम्॥

## १५५। इदुदुपधस्य चाप्रत्ययस्य ॥८।३।४१॥

दी—। इकारोकारोपधस्य अप्रत्ययस्य विसर्गस्य षः स्यात् कुप्वोः। निष्प्रत्यूहम्। आविष्कृतम्। दुष्कृतम्। 'अप्रत्ययस्य' किम्? अग्निः करोति। वायुः करोति।

A विसर्ग that comes after इ or उ and is not in a प्रत्यय changes into ष when कवर्ग or पवर्ग follows. Thus निःप्रत्यूहम् gives निष्प्रत्यूहम् because निर् or निस् is a primitive word and the विसर्ग is but a transformation of its र or स। Similarly आविष्कृतम् etc.

Why say अप्रत्ययस्य? Witness अग्निः करोति etc., where the विसर्ग comes from सु which is a प्रत्यय and therefore does not change.

मित—। "विसर्जनीयस्य षः कुप्वोः" इत्यस्ति। 'अपदादौ' इति न सम्बध्यते। 'अप्रत्ययस्य' प्रत्ययजातवर्जितस्य। निष्प्रत्यूहमित्यत्र निसः सकारस्य विसर्गः, न चासौ प्रत्ययजातविसर्गः। तेन षत्वम्। एवमुत्तरत्रापि, अग्निः करोति इत्यत्र सुप्रत्ययजातविसर्गः। तेन न षत्वम्॥

**दी—। एकादेशशास्त्रनिमित्तकस्य न षत्वम्, कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठात्। तेन इह न—मातुः कृपा।**

A विसर्ग arising from an एकादेश does not become ष as is inferred from the inclusion of भ्रातुष्पुत्र in the कस्कादि list for its ष। Hence no ष in मातुः कृपा।

मित—। 'एकादेशशास्त्रं निमित्तं' यस्य तादृशस्य विसर्जनीयस्य षत्वं न भवति। यदि स्यात् कस्कादिषु भ्रातुष्पुत्रशब्दं नैव पठेत् विनापि पाठं षत्वनिर्वाहः स्यात्। तथा च भ्रातृ ङस् इति स्थिते "ऋत उत्" (२७९—६।१।१११) इति ऋकारस्य ङसः अकारस्य च 'उ' इत्येकादेशः। स च रपरः। तेन भ्रात् उर् स् इति जातम्। समुदायस्य पदत्वे संयोगान्तलोपे भ्रातुर् इति। "खरवसानयोः—" इति विसर्जनीये भ्रातुः इति रूपम्। अयञ्च विसर्गः रकारात् जातः स च रकारो न प्रत्ययः प्रत्ययाङ्गं वा। तेन भ्रातुः पुत्रः इति संहितायां "इदुदुपधस्य—" इति षत्वे भ्रातुष्पुत्र इति लभ्यते। सूत्रकारस्तु नैव लभ्यते इति हि मन्यते तत एव कस्कादिषु पठति। अलाभे कारणं मृग्यम्। एकमेव कारणं दृश्यते। रकार इह विसर्गस्य निमित्तम्। एकादेश उकारः पुनः रकारस्य निमित्तम्। परम्परया एकादेशोऽयं विसर्गस्य निमित्तम्। नूनम् 'एकादेशनिमित्तकस्य' विसर्जनीयस्य 'न षत्वम्' इति हि सूत्रकारस्य मतम्। तथा सति 'मातुः कृपा' इत्येवमादिषु षत्वं न भवति।

**दी—। "मुहुसः प्रतिषेधः" (वार्त्तिक)। मुहुःकामा।**

The षत्व is prohibited of the विसर्जनीय of मुहुस्। Thus मुहुःकामा—one who covets it every moment.

मित—। 'विसर्जनीयस्य' इत्यस्ति। 'मुहुसः' मुहुसशब्दस्य यो विसर्जनीयः तस्य 'प्रतिषेधः' षत्वप्रतिषेधः। "वक्तव्यः" इति पूरणीयम्। मुहुः कामयते इति मुहुःकामा। कर्त्तरि णप्रत्ययः।

## १५६। तिरसोऽन्यतरस्याम् ॥८।३।४२॥

**दी—। तिरसो विसर्गस्य सो वा स्यात् कुप्वोः। तिरस्कर्त्ता—तिरःकर्त्ता।**

The विसर्ग of तिरस् optionally becomes स when कवर्ग or पवर्ग follows. Thus तिरस्कर्त्ता etc.

मित—। 'विसर्जनीयस्य सः कुप्वोः' इत्यस्ति। उदाहरणे पक्षे जिह्वामूलीयोऽपि तिर ᳵ कर्त्ता इति। तिरस्कर्त्ता अभिभावकः। "तिरोऽन्तर्द्धौ" इति गतिसंज्ञा। अन्तर्द्धिरप्यभिभव एव॥

## १५७। द्विस्त्रिश्चतुरिति कृत्वोऽर्थे ॥८।३।४३॥

**दी—। कृत्वोऽर्थे वर्त्तमानानामेषां विसर्गस्य षकारो वा स्यात् कुप्वोः। द्विष्करोति—द्विः करोति इत्यादि। 'कृत्वोऽर्थे' किम्? चतुष्कपालः।**

When द्विः, त्रिः, चतुः convey the sense of कृत्वसुच्, their विसर्ग optionally changes into ष if कवर्ग or पवर्ग follows. The sense of कृत्वसुच् is the repetition of an act. Thus द्विष्करोति does it twice; etc. Why say कृत्वोऽर्थे? Witness चतुष्कपालः—on offering cooked in four pans. Here there is no कृत्वोऽर्थ, the विसर्ग is not प्रत्ययजात, hence the ष is compulsory by "इदुदुपधस्य—"।

मित—। 'विसर्जनीयस्य षः अन्यतरस्याम्' इत्यस्ति। "कुप्वोः" इति च। 'कृत्वः' इति उत्सृष्टानुबन्धः कृत्वसुच्प्रत्ययः। क्रियाभ्यावृत्तिगणने तस्यार्थः। तस्मिन्नर्थे द्वित्रिचतुर्शब्देभ्यः सुच् प्रत्ययो भवति कृत्वसुचोऽपवादः। सुजन्तानां

द्विचिचतुरां यो विसर्गः तस्य षः इति फलितम् ॥ षत्वाभावे द्विःकरोति—द्वि करोति। चतुर्शब्दात् सुचिकृते चतुर् स् इति। तस्य सुब्लुकि "रात् सस्य" इति सलोपे 'चतुः' इति रूपम् विसर्गश्च न प्रत्ययजातः किन्तु चतुरो रकाराज्जातः। तेन 'चतुष्कपालः' इत्यत्र अप्रत्ययविसर्गत्वात् "इदुदुपधस्य—" इति नित्यं षः॥ प्रकृते सूत्रे द्विः, त्रिः इति प्रत्ययजातविसर्गत्वात् षत्वं न स्यात्, चतुः इति नित्यं स्यात्॥

## १५८। इसुसोः सामर्थ्ये ॥८।३।४४॥

टी—। इसुसोर्विसर्गस्य षः स्याद्वा कुप्वोः। सर्पिष्करोति—सर्पिः करोति। धनुष्करोति—धनुः करोति। सामर्थ्यमिह व्यपेक्षा। 'सामर्थ्ये' किम्? तिष्ठतु सर्पिः पिब त्वमुदकम्।

The विसर्ग of इस् and उस् optionally changes into ष when कवर्ग or पवर्ग follows and there is interdependence. Thus सर्पिष्करोति etc. Here सामर्थ्य is interdependence, i. e., syntactical relation. Why say सामर्थ्ये? Witness तिष्ठतु etc. where तिष्ठतु सर्पिः is one sentence and पिब त्वमुदकम् is another, consequently सर्पिः and पिब are not syntactically related—no ष etc.

मित—। 'विसर्जनीयस्य सः कुप्वोः अन्यतरस्याम्' इति सर्वमस्ति। 'सामर्थ्यं' द्विविधम् एकार्थीभावः व्यपेक्षा च। इह व्यापेक्षामात्रं गृह्यते। 'व्यापेक्षा' च अन्वयः। अन्वयः पुनरेकवाक्यतायामेव सम्भवति। एवम् एकस्यैव वाक्यस्य यदा विसर्जनीयः कवर्गपवर्गौ च अङ्गं तदा एव विधिः इति फलितम्॥ सर्पिस् इत्यौणादिकइस्प्रत्ययः धनुस् इत्युस्प्रत्ययः। तेन "इदुदुपधस्य—" इति षत्वं न सिध्यति। पदादौ ककार इति "इणः षः" इत्यपि न प्रवर्तते॥ 'तिष्ठतु' 'इत्यादौ' 'सर्पिः' इति 'पिब' इति च भिन्नवाक्यस्थमतो न षत्वप्राप्तिः॥

## १५९। नित्यं समासेऽनुत्तरपदस्थस्य ॥८।३।४५॥

टी—। इसुसोर्विसर्गस्य अनुत्तरपदस्थस्य समासे नित्यं षः स्यात्

कुप्वोः परयोः। सर्पिष्कुण्डिका। 'अनुत्तरपदस्थस्य' इति किम्? परमसर्पिःकुण्डिका।

In a compound the विसर्ग of इस् and उस्, if not in an उत्तरपद, always changes into ष when कवर्ग or पवर्ग follows. Thus सर्पिष्कुण्डिका। Why say 'अनुत्तरपदस्थस्य—not being in an उत्तरपद'? Witness परम etc. Here the first constituent of the compound is परमसर्पिस् which itself is a compound and has इस् in its उत्तरपद। Hence no ष।

मित—। 'इसुसोः विसर्जनीयस्य षः कुप्वोः' इत्यन्वितं। "उत्तरपदमिति समासस्य चरमावयवः। 'इसुसोः' इत्यवयवषष्ठी। "इसुसन्तः शब्दः यदि कवर्गादिना पवर्गादिना वा शब्दान्तरेण समस्यते तदा इसुसोर्विसर्गस्य नित्यं षः स्यात्। स चेत् इसुसन्तः शब्दः स्वयं कस्यचित् समासान्तरस्य चरमावयवः तदा तु न भवति" इति निष्कृष्टार्थः॥ सर्पिः कुण्डिका इति समासे नित्यं षः॥ परमसर्पिषः इत्यत्र इसन्तः सर्पिस्शब्द उत्तरपदम्। अस्य तु पुनः समासे षत्वं न भवति—परमसर्पिः कुण्डिका॥

दी—। कस्कादिषु सर्पिष्कुण्डिकाशब्दः असमासे व्यपेक्षाविरहेऽपि षत्वार्थः व्यपेक्षायां नित्यार्थश्च।

सर्पिष्कुण्डिका occurs in the कस्कादि list. Apparently this is superfluous but really it serves two purposes there. This is cartainly not a compound for then "नित्यं समासे—" applies. Then uncompounded there may or may not be interdependence.

(i) No interdependence. सर्पिस् is a derivative, hence सर्पिः कुण्डिका cannot give ष by "इदुदुपधस्य—" because the विसर्ग is प्रत्ययजात। Hence we expect सर्पिः कुण्डिका। The inclusion into the कस्कादि list bars both these and gives the single form सर्पिष्कुण्डिका।

(ii) There is interdependence. "इसुसोः सामर्थ्ये" applies and

gives सर्पिष्कुण्डिका—सर्पिःकुण्डिका—सर्पि ≍ कुण्डिका। Inclusion in the list gives ष and bars the other two forms.

मित—। एवं सिद्धे सर्पिष्कुण्डिकाशब्दे किमर्थमस्य कस्कादिषु पाठः? इह समासे सिद्धः। असमासेऽपि यथा स्यात् तदर्थं पाठः॥ असमासेऽपि व्यपेक्षा चेदस्ति "इसुसोः सामर्थ्ये" इति प्राप्नोति। अथ नास्ति व्यापेक्षा "इणः षः" इति "इदुदुपधस्य—" इति वा सिध्यति॥ न सिध्यति। 'व्यपेक्षायां' "एतत् सर्पिः कुण्डिकायां धेहि" इत्यादिस्थले "इसुसोः—" इति वैकल्पिकः षः 'नित्यार्थस्तु' पाठः। 'व्यापेक्षाविरहे' "इह सर्पिः कुण्डिका पुनः क्व" इत्यादिषु "इणः षः" इति न प्राप्नोति कवर्गस्य पदादित्वात्। "इदुदुपध—" इत्यपि न, विसर्गस्य प्रत्ययजातत्वात्। एवमप्राप्ते षत्वे 'षत्वार्थः' पाठः॥

## १६० । अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ॥८।३।४६॥

दी—। अकारादुत्तरस्य अनव्ययस्य विसर्गस्य समासे नित्यं सकारादेशः स्यात् करोत्यादिषु परेषु न तु उत्तरपदस्थस्य। अयस्कारः। अयस्कामः। अयस्कंसः। अयस्कुम्भः। अयस्पात्रम्। अयःसहिता कुशा अयस्कुशा। अयस्कर्णी। 'अतः' किम्? गीःकारः। 'अनव्ययस्य' किम्? स्वःकामः। समासे किम्? यशः करोति। 'अनुत्तरपदस्थस्य' किम्? परमयशःकारः।

A विसर्ग, that comes after short अ and is neither in an अव्यय nor in an उत्तरपद, always changes into स if compounded with कृ, कम, कंस, कुम्भ, पात्र, कुशा, कर्णी। Here कृ and कम are roots. Hence अयस्कार: and अयस्काम: are उपपद तत्पुरुष। अयस्कंस:, अयस्कुम्भ; अयस्पात्रम् are षष्ठी तत्पुरुष। अयस्कुशा is a कर्मधारय of the शाकपार्थिवादि class. अयस्कर्णी is a बहुव्रीहि in the feminine. Why 'अत:'? Witness गी:कार: without स। Why अनव्ययस्य? Witness स्व:काम:—desiring abode in heaven—where स्वर्, being an अव्यय the विसर्ग is not अनव्यय and there is no स। Why say

समासे ? Witness यशः करोति। Why अनुत्तरपदस्थस्य ? Witness परमयशः कारः—that which gives great fame—where परमयशः has the विसर्ग in the उत्तरपद, i. e., यशस्, and it does not change.

मित—। 'विसर्जनीयस्य' इत्यस्ति। "सोऽपदादौ" इत्यतः 'सः' इत्यनुवर्त्तते। "नित्यं समासे—" इति च सर्वं सम्बध्यते। 'अतः' इति पञ्चमी। अयञ्च मिलितोऽन्वयः—समासे अतः (परस्य) अनव्ययस्य अनुत्तरपदस्थस्य विसर्जनीयस्य नित्यं सः कृप्रभृतिषु उत्तरपदेषु। विसर्गजिह्वामूलीयोपध्मानीयानामपवादः। अयः करोतीति अयस्कारः। "कर्मण्यण्"। अयः कामयते इति अयस्कामः। "शीलिकामि—" इति णः। अयसः कंसः पात्रभेदः। अयःसहिता कुशा अयस्कुशा, शाकपार्थिवादि। किञ्चिदयो रचितं कुशायाम् इत्यर्थः। ईदृशे कष्टव्याख्याने कारणम् अयोनिर्मितः अयोविकारः इत्यादिषु उक्तेषु स्त्रियां "जानपदकुण्ड—" इति सूत्रेण कुशी इति स्यात्, सूत्रे तु 'कुशा' इति सकारे निमित्तमुच्यते। अय इव कर्णौ अस्याः अयस्कर्णी, "नासिकोदर—" इत्यादिना ङीष्॥

## १६१। अधःशिरसी पदे ॥८।३।४७॥

**वी—। एतयो विंसर्गस्य सादेशः स्यात् पदशब्दे परे। अधस्पदम्। शिरस्पदम्। 'समासे' इत्येव। अधः पदम्। शिरः पदम्। 'अनुत्तरपदस्थस्य' इत्येव। परमशिरःपदम्।**

The विसर्ग of अधः and शिरः becomes स when पद follows in a समास and विसर्ग is not in an उत्तरपद। Thus अधस्पदम्—under the foot. शिरस्पदम्—the position of the head. This is in a समास only, also when not in an उत्तरपद। भास्कर is defended by placing it in the कस्कादि list.

मित—। 'सः' इत्यस्ति। 'नित्यं समासे अनुत्तरपदस्थस्य' इत्यनुवर्त्तते। अधस्पदम् इति षष्ठीसमासः। पदस्य अधः इति विग्रहः। मयूरव्यंसकादित्वात् पदशब्दस्य परनिपातः। इति वृत्तिः। यद्वा पदं स्थानम्। अधः पदं नीचस्थानम्, सुप्सुपा। एवं शिरसः पदं स्थानं शिरस्पदम्॥

१४४। कस्कादिषु च ॥८।३।४८॥

दी—। भास्करः।

In भास्कर the विसर्ग is after आ not after अ, hence we donot expect स। But the word is of the कस्कादि class, hence the स।

मित—। व्याख्यातं प्राक्। 'अतः' इति तपर करणात् आकारात् सत्वं न भवति। भास्कर शब्दे च सकारो दृश्यते। कस्कादीनाम् आकृतिगणत्वात् सिद्धम्।

इति विसर्गसन्धिप्रकरणम्।

## अथ स्वादि सन्धिप्रकरणम्।

दी—। "स्वौजसमौट्—" (१८३) इति सुप्रत्यये 'शिवस् अर्च्यः' इति स्थिते—

Attaching सु to शिव by the rule "स्वौजस्—" we have शिवस् अर्च्यः। And then—

१६२। ससजुषो रुः ॥८।२।६६॥

दी—। पदान्तस्य सस्य सजुष्शब्दस्य च रुः स्यात्। जश्त्वापवादः।

रु is the substitute of स and सजुष् if final in a पद। This overrules the जश् change. रु drops उ and appears as र्। Hence शिवस् being a पद we have शिवर् अर्च्यः। The next rule now applies.

मित—। 'स' इत्यकार उच्चारणार्थः। 'पदस्य' इत्यधिकारः। 'ससजुषोः' इति षष्ठी। पदस्य सस्य पदस्य सजुष्शब्दस्य च। फलितमाह पदान्तस्य सस्य सजुष्शब्दस्य च' इति। 'रुः' इत्यादेशः। उकार इत्। "अलोऽन्त्यस्य" इत्यन्त्यस्य भवति। 'जश्त्वापवादः' इति "झलां जशोऽन्ते" इति सूत्रापवादः। सस्य दकारः

षस्य च डकारो न भवति। 'झलाम्' इति सामान्येन विधिः 'सस्य' इति विशेष विधिः। सामान्यस्यापवादो विशेषः इति जश्त्वापवादः॥ एतेन 'शिवर् अर्च्यः' इति स्थिते—

१६३। अतो रोरप्लुतादप्लुते ॥६।१।११३॥

दी—। अप्लुतादतः परस्य रोः उः स्यात् अप्लुते अति। "भोभगो-अघो—" (१६७) इति प्राप्तस्य यत्वस्यापवादः। उत्वं प्रति रुत्वस्य असिद्धत्वं तु न भवति, रुत्वमनूद्य उत्वविधेः सामर्थ्यात्।

When रु follows a short अ which is not प्लुत it changes into उ if it is itself followed by another such अ। This over-rules the य enjoined by "भो भगो—"। Here रु is not असिद्ध when उ is to be substituted because the change is enunciated by specifically mentioning रु। We have now शिव उ अर्च्यः।

मित—। 'उत्' इत्यनुवर्त्तते 'अति' इति च॥ "भोभगो—" इत्यत्र अपूर्वस्य रोर्यत्वं विधीयते। इह तु अत्पूर्वस्य विधिः। स च अत् अप्लुत इति विशेष्यते। तत् सामान्यविधिर्यत्वं विशेषविधिः उत्वं तस्य अपवादः॥ ननु परं शास्त्रं रुत्वं पूर्वञ्च उत्वं तत् उत्वं प्रति रुत्वमसिद्धमित्युत्वं न प्रवर्त्तेत। तत्राह 'रुत्वम् अनूद्य' स्पष्टमुक्त्वा इह 'उत्वं विहितं' तेन असिद्धं न भवति। उत्वञ्च निर्बाधम्॥ एतेन शिव उ अर्च्यः इति स्थिते।

१६४। प्रथमयोः पूर्वसवर्णः ॥६।१।१०२॥

दी—। अकः प्रथमाद्वितीययोः अचि परे पूर्वसवर्णदीर्घ एकादेशः स्यात्। इति प्राप्ते—

If an अक् is followed by an अच् of the first two triads of the सुप् terminations the long vowel homogeneous with the preceding is the single substitute of both. This apparently seems to direct शिव् आ अर्च्यः। But the next rule interferes.

मित—। 'एकः पूर्वपरयोः' इत्यधिकृतम्। 'अकः' इत्यनुवर्त्तते 'दीर्घः' इति च। 'अचि' इत्यस्ति। 'प्रथमा' इति सुपामाद्यस्त्रिकः। द्विवचनेन द्वितीयस्त्रिकोऽपि गृह्यते। एवम् 'प्रथमयोः' प्रथमाद्वितीययोरित्यर्थः। शेषे षष्ठी। प्रथमाद्वितीययोर्यः अच् तस्मिन् परे। 'अकः' इति पञ्चमी॥ उदाहरणे 'शिव उ अर्च्यः' इत्यत्र गुणे प्राप्ते स्थानिद्वारा 'उ' इति प्रथमयोरच् इति कृत्वा अनेन बाधः॥

**१६५। नादिचि ॥६।१।१०४।**

**दी—। अवर्णात् इचि परे न पूर्वसवर्णदीर्घः। "आद्गुणः" (६६)। "एङः पदान्तादति" (८३)। शिवोऽर्च्यः। 'अतः' इति तपरः किम्? देवा अत्र। 'अति' इति तपरः किम्? श्व आगन्ता। 'अप्लुतात्' किम्? एहि सुस्रोतः ३ अत्र स्नाहि।**

But when इच् follows an अ or आ in the frist two triads of Bibhaktis there shall be no substitution of the long vowel homogeneous with the previous. Hence in शिव उ अर्च्यः we have गुण by "आद्गुणः"। This gives शिवो अर्च्यः। Next there is पूर्वरूप by "एङः पदान्तादति" yielding finally शिवोऽर्च्यः।

Why say अतः with a त? This is to exclude आ। Thus in the first case plural देव जस् अत्र gives देवार् अत्र where the र् being after आ we do not get उ for it but य् instead by "भोभगो—" yielding देवाय् अत्र। Next "लोपः शाकल्यस्य" gives finally देवा अत्र—देवायत्र।

Why say अति with a त? This too is to exclude आ। Thus in श्वस् आगन्ता we have श्वर् आगन्ता। Next no उ because आ follows not अ। With य् as before we get श्व आगन्ता—श्वयागन्ता।

Why say अप्लुतात्? To exclude प्लुत। Thus in एहि सुस्रोत ३ स् अत्र स्नाहि—Come Susrotas you bathe here—we have सुस्रोत३र् अत्र &c. Now र् does not become उ because the अ is प्लुत।

मित—। 'प्रथमयोः पूर्वसवर्णः' इत्यस्ति। प्रथमयोः आत् इचि न पूर्वसवर्णः इति मिलितोऽन्वयः॥ एतेन बाधाभावात् गुणः प्रवर्त्तते। गुणे पूर्वरूपे च शिवो-

ऽर्थः। जसि देवास् अत्र इति स्थिते रुत्वम्। आकारात् परो रुः इति उत्वं न। "भोभगो—" इति यत्वे "लोपः शाकल्यस्य" इति पाक्षिके लोपे देवा अत्र— देवायत्र। एवं अश्व आगन्ता इत्यत्रापि॥

दी—। प्लुतस्य असिद्धत्वात् अतः परोऽयम्॥ 'अप्लुतात्' इति विशेषणे तु तत्सामर्थ्यान्नासिद्धत्वम्। तपरकरणस्य तु न सामर्थ्यम्, दीर्घनिवृत्तया चरितार्थत्वात्। 'अप्लुते' इति किम्? तिष्ठतु पय अ३ग्निदत्त। "गुरोरनृतः—" (९७) इति प्लुतः।

But प्लुत is असिद्ध, so the रु in सुस्रोत ३ र् अत्र is to be taken as after short अ; hence even if you say अप्लुतात् you cannot avoid उ। No, when the Sutrakara says अप्लुतात् he sees the possibility of the presence of प्लुत here, hence the प्लुत is not असिद्ध।

Even then the अप्लुतात् is unnecessary because you say अतः where the त implies the possibility of प्लुत and excludes the प्लुत। It does not do it necessarily, the त might be to exclude दीर्घ। Hence, to make it certain, अप्लुतात् is necessary.

Why say अप्लुते? Witness तिष्ठतु &c. where पयर् अ३ग्निदत्त does not admit उ, the अ following being प्लुत। It is प्लुत by "गुरोरनृतः—"।

मित—। 'एहि सुस्रोतऽ३ः' इत्यादावुदाहरणं विचारयति। इह उत्वे कर्त्तव्ये त्रिपाद्या कृतः प्लुतः असिद्धः। तेन 'सुस्रोत३र् अत्र' इति ह्रस्वादवर्णात् पर एव रुः। 'अप्लुतात्' इत्युक्तेऽपि उत्वं स्यात्॥ नैव स्यात्। सूत्रकारस्तु सिद्धं प्लुतं मन्यते अतएव 'अप्लुतात्' इति विशेषणमुच्यते। संहिताधिकारे "प्लुतप्रगृह्या अचि नित्यम्" इति तस्य सूत्रम्। असिद्धे प्लुते तन्नोपपद्यते तत् सिद्धः प्लुतः, युज्यते च 'अप्लुतात्' इति विशेषणम्॥

यद्येवम् 'अतः' इति तपरकरणमेव पर्याप्तं प्लुतप्रतिषेधाय 'अप्लुतात्' इति पृथगुक्तिर्निष्प्रयोजना। ननु 'अतः' इत्युक्ते सन्देहः स्यात् दीर्घो निरस्यते प्लुतो वा

उत उभयम्। असन्देहार्थम् 'अप्लुतात्' इति वचनम्। 'अतः' इति दीर्घनिरासः 'अप्लुतात्' इति प्लुतनिषेधः॥

व्याख्यानान्तरञ्च भाष्ये दृश्यते "अप्लुतभाविनः अप्लुतभाविनि इत्येवमेतद्विज्ञायते" इति। अयमाशयः—इह सूत्रे यस्य प्लुतत्वसम्भावना अस्ति स प्लुत इत्युच्यते। 'अप्लुतात्' प्लुतत्वसम्भावनाविहीनात् 'अतः' ह्रस्वादवर्णात् परस्य 'रोः अप्लुते' प्लुतत्वसम्भावनाशून्ये 'अति' ह्रस्वे अवर्णे परे 'उः' स्यात् इति च सूत्रार्थः। परं प्रकृतिभावविधानात् सिद्धः प्लुतः स्वरसन्धिषु इत्येव सिद्धान्तो भाष्यकारस्य॥

१६६। हशि च ॥६।१।११४॥

दी—। अप्लुतादतः परस्य रो उः स्यात् हशि। शिवो वन्द्यः।

रु, coming after an अ which is not प्लुत, changes into उ if a हश् follows. Thus शिवस् वन्द्यः = शिवरु वन्द्यः = शिव उ वन्द्यः = शिवो वन्द्यः।

मित—। 'अतो रोरप्लुतात्' इत्यस्ति 'उत्' इति च। 'हश्' इति वर्गप्रथमद्वितीयवर्जं शषसवर्जञ्च व्यञ्जनम्॥

दी—। 'रोः' इत्युकारानुबन्धग्रहणात् नेह—प्रातरह, धातर्गच्छ।

The rule says रु with an उ as अनुबन्ध। Hence we do not get उ where the र् does not come from रु। Thus प्रातर् अव (प्रातरव) धातर् गच्छ (धातर्गच्छ)।

मित—। अनुबध्यते स्वरूपप्रदर्शनात् परं योज्यते इति अनुबन्धः इत्संज्ञको वर्णः। कर्मणि घञ्। 'रु' इत्यत्र उकारः अनुबन्धः। उकारः अनुबन्धः अस्य 'उकारानुबन्धः' उदित् इत्यर्थः। 'उकारानुबन्धग्रहणात्' हेतोः 'न इह' रकारस्य उकारः। 'प्रातर् अव' इत्यत्र रकारो नैसर्गिकः न हि रुशब्दाज्जातः। तेन न उत्वम्। 'धातर् अव' इति ऋकाराज्जातो रकारः न रुशब्दात् इति ह्यापिनीत्वम्॥

दी—। 'देवास् इह' इति स्थिते रुत्वम्।

In देवास् इह we have रु by "ससजुषोरुः"। This gives देवार् इह। Now—

मित—। रुत्वे कृते 'देवार् इह'। ततः सूत्रान्तरं प्राप्नोति।

## १६७। भोभगोअघोअपूर्वस्य योऽशि ॥८।३।१७॥

दी—। एतत्पूर्वकस्य रोर्यादेशः स्यादशि परे। असन्धिः सौत्रः। "लोपः शाकल्यस्य" (६७)। देवा इह—देवायिह।

रु preceded by भो, भगो, अघो and अ changes into य् when an अश् follows. The absence of सन्धि in भगो अघो and अघो अ is आर्ष। Starting with देवास् इह we get देवार् इह and then देवाय् इह। The य् now elides optionally by "लोपः—"। Hence देवा इह—देवायिह।

मित—। पूर्वसूत्रात् 'रोः' इत्यनुवर्त्तते। 'भोभगो—' इत्यादि तस्य विशेषणम्। भो च भगो च अघो च अश्च इति द्वन्द्वः। एते पूर्वे यस्य इति बहुव्रीहिः। भोशब्द पूर्वस्य भगोशब्दपूर्वस्य अघोशब्दपूर्वस्य अकारपूर्वस्य च रोः इत्यर्थः। भोस् भगोस् अघोस् इति निपाताः। तेषामाद्यंशस्यानुकरणम्॥ ननु समासे नित्यः सन्धिः, तत् भगो अघो इत्यत्र च "एङः पदान्तदति" इति पूर्वरूपापत्तिः। आर्षः सन्ध्यभावः इत्याह 'असन्धिः सौत्रः' इति॥ उदाहरणे "लोपः—" इति यकारस्य पाक्षिको लोपः॥

दी—। 'अशि' किम्? देवाः सन्ति। यद्यपि इह यत्वस्य असिद्धत्वात् विसर्गो लभ्यते तथापि विसर्गस्य स्थानिवद्भावेन रुत्वात् यत्वं स्यात्। न ह्ययमल् विधिः, 'रोः' इति समुदायरूपाश्रयणात्।

Why say अशि? Witness देवाः सन्ति where, य not being available, विसर्ग comes in by "खरव—"। Besides difficulty will arise if अशि is omitted. Thus, without the restriction अशि, देवार्‌ सन्ति gives देवाय् सन्ति। This य् is असिद्ध with respect to "खरव—" so, taking it as still र्, we get विसर्ग with the form देवाः सन्ति। Apparently then अशि is superfluous. But no, the विसर्ग must be treated as स्थानिवत् and "भोभगो—" will take it as

र and change it into य् again. Consequently देवा: सन्ति will not be available at all. Hence अशि is well said.

You cannot say, that the विसर्ग is not स्थानिवत् because the restoration of य् is by an अल्विधि। It is not an अल्विधि, for the विधि is of रु which is not a pure अल् but a combination ( समुदायरूप )।

मित—। 'अशि' इत्यनुक्तौ दोषमाह। तदा "भोभगोअघोअपूर्वस्य यः" इत्येव सूत्रम्। एतेन अशि च खरि च अविशेषेण रोर्यत्वं विधीयते। तत् देवार् सन्ति इति स्थिते यत्वे देवाय् सन्ति। यकारोऽयं "खरव—" इत्येतत् प्रति असिद्धः। तेन रकारद्वारेण 'इह विसर्गो लभ्यते'। परं विसर्ग एष स्थानिद्वारेण रुरेव इति भूयोऽपि "भोभगो—" इति यकारे देवाय् सन्ति इति पूर्वरूपप्रत्यापत्तिः, देवा: सन्ति इति तु न सिध्यति इत्यनिष्टम्। तत् सुष्ठूक्तम् 'अशि' इति। स्थानिवद्भावश्च अल्विधावेव प्रतिषिद्धः, अयं पुनः 'रु' इति 'समुदायरूपस्य' विधिः न र् इत्यल्मात्रस्य॥ वृत्तौ भाष्ये च "रो रि" इत्यतो 'रः' इत्यनुवर्त्त्य 'रोः' यो 'रः' तस्य 'यः' स्यात् इति व्याख्याय अल्विधिरेवाश्रितः, 'अशि' इत्येतच्च उत्तरार्थम् इत्युक्तम्॥

**दो—। भोस् भगोस् अघोस् इति सकारान्ता निपाताः। तेषां रोर्यत्वे कृते—**

भोस् &c. are indeclinables ending in स। The स changing into रु and the रु into य् the next rule operates.

मित—। 'भोस्' इत्यादयः संबोधनसूचका 'निपाताः' अव्ययानि। भोस् अच्युत इति स्थिते भोर् अच्युत, ततो भोय् अच्युत। ततश्च—

**१६८। व्योर्लघुप्रयत्नतरः शाकटायनस्य ॥८।३।१८॥**

**दो—। पदान्तयोर्वकारयकारयोः लघूच्चारणौ वयौ वा स्तः अशि परे। यस्य उच्चारणे जिह्वाग्रोपाग्रमध्यमूलानां शैथिल्यं जायते स लघूच्चारणः।**

In place of व् and य् final in a पद those requiring lighter effort in their pronunciation are substituted by Sakatayana when an अश् follows. The effort is lighter when in the pronunciation the tip and its neighbourhood as well as the middle and the root of the tongue become lax. Sakatayana's effort is lighter, but others pronounce them as vowel; hence there is option ( वा स्तः ) ।

मित—। 'पदस्य' इत्यधिकृतम्। व् च य् च व्यौ। तयोः 'व्योः' वकार-यकारयोः वकारान्तस्य यकारान्तस्य च पदस्य इत्यर्थः। "अलोऽन्त्यस्य", तदाह —'पदान्तयोर्वकारयकारयोः' इति। 'भोभगोअघोअपूर्वस्य' इति नानुवर्त्तते। सामान्येन विधिः। 'अशि' इत्यस्ति। वृत्तिकारादयस्तु "भोभगो—" इत्यनु-वर्त्तयन्ति। वकारयकारयोरीषत्स्पृष्टतया वर्ग्यापेक्षया लघुः प्रयत्नो भवति उच्चारणे, ततोऽपि लघुप्रयत्नो लघुप्रयत्नतरः। यथोचितप्रयत्नस्य लघुप्रयत्न आदेशः स च शाकटायनस्य, अन्येषां तु न। तदाह 'वा स्तः' इति। अन्येषां किम् इत्या-काङ्क्षायामाह—

## १६८। ओतो गार्ग्यस्य ॥८।३।२०॥

**दो—ओकारात् परस्य पदान्तस्य अलघुप्रयत्नस्य यकारस्य नित्यं लोपः स्यात्। गार्ग्यग्रहणं पूजार्थम्। भो अच्युत। लघुप्रयत्नपक्षे—भोय् अच्युत। पदान्तस्य किम्? तोयम्।**

य, final in a पद and coming after ओ but not lightly pronounced, is always elided as desired by the revered tutor गार्ग्य। Thus भो अच्युत with य pronounced as usual and भोय् अच्युत with य lightly pronounced. Why say पदान्तस्य? Witness तोयम् without the elision of य though it is after ओ।

मित—। 'ओतः' इति गम्यमान परशब्द योगे पञ्चमी। 'व्योः' इत्यनुवर्त्तते। 'पदस्य' इत्यधिकृतम्, तेन प्राग्वत् 'पदान्तस्य' विधिः। वव ओतः परः पदान्तवकारो न सम्भवति इति यकारस्य विधिः। योऽयम् अनुवृत्तो यकारः स "व्योर्लघु—" इति

सूत्रे स्थानी अतएव यथोचितप्रयत्नः न लघुप्रयत्नः। तदाह 'अलघुप्रयत्नस्य' इति। "लोपः शाकल्यस्य" इत्यतो 'लोपः' इत्यनुवर्त्तते। ननु तेनैव सूत्रेण भोतः परस्यापि लोपः सिध्यति, किमेतेन सूत्रेण? सत्यं सिध्यति परं शाकल्यग्रहणात् विभाषा भवति, इष्यते तु नित्यं स्यादिति। अतः पृथगुक्तिः 'गार्ग्यग्रहणञ्च पूजार्थं न विकल्पार्थम्। 'अग्नि' इत्येव॥ भोय् अच्युत इति जाते भोयच्युत इति लघूच्चारणं शाकटायनस्य, अन्येषां तु गार्ग्यमतेन लोपे भो अच्युत इति॥ 'तौयम्' इति प्रत्युदाहरणन्तु "भोभगो—" इत्यनुवृत्तिर्नास्ति इति पक्षे।

१७०। उञि च पदे ॥८।३।२१॥

**दी—। अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोप उञि (पदे?) परे। स उ एकाग्निः। 'पदे' किम्? तन्त्रयुतम्। वेञः सम्प्रसारणे रूपम्। यदि तु प्रतिपदोक्तो निपात उञिति ग्रहीष्यते, तर्हि उत्तरार्थं पदग्रहणम्।**

य and व final in a पद and preceded by अ or आ elides when उङ् as a पद follows. Thus सः उ which is really सस् उ the विसर्ग being असिद्ध, gives सर् उ and then सय उ by "भोभगो—"। This य is now elided.

Why say पदे? Witness तन्त्रयुतम् which was originally तन्त्रे उतम् where उत is from वेङ् तन्तुसन्ताने with क्त attached which changes व into उ (सम्प्रसारण)। Next तन्त्रय् उतम् with अय् by "एचोऽय—"। This य is not elided because the उ is not a पद but only part of a पद। To this justification of पदे it may be objected that by the maxim "लक्षण प्रतिपदोक्तयोः प्रतिपदोक्तस्यैव"— If in a rule a certain form occurs which is both original and derived, the rule applies to the original only—the उ of उत being a derivative is not contemplated at all in the rule; hence तन्त्रयुतम् is safe without the mention of पदे which is thus superfluous. In that case we say पदे will be used in a subsequent rule.

मित—। "भोभगो—" इत्यनेन सम्बद्धमेतत् सूत्रम्। तत्र च भोतः परे लोप उक्तः। सम्प्रति 'अवर्णपूर्वस्य' आह। 'य्वोः' इत्यस्ति। 'लोपः' इति च।

'पदस्य' इत्यधिकृतम्। इह व्याख्याने 'उञि' इत्यतः 'पदे' इति स्खलितमिव प्रतिभाति। 'उञ्' इति निपातो ञित्। अयमपि नित्यो लोपः। 'सः उ' इति स्थिते विसर्गस्य असिद्धत्वात् रोर्यत्वे 'सय् उ' इति। ततो यलोपः॥ तन्वे उतम् इत्यत्र अयादेशे तन्वय् उतम्। उकार इह पदाङ्गमात्रम् न पदम्। तेन यलोपः। ननु 'उ' इति शब्द इह लाक्षणिकः। प्रतिपदोक्तश्च पठितः अव्ययेषु। "लक्षण-प्रतिपदोक्तयोः प्रतिपदोक्तस्यैव" इति परिभाषया इह अव्ययमेव गृह्यते। तेन तन्वयुतम् इत्यत्र लोपप्रसङ्ग एव नास्ति केयं पदं वा अपदं वा इति विचारणा? अतः 'पदे' इतीह निष्प्रयोजनम्। उत्तरत्र "ङमो ह्रस्वात्—" इति सूत्रे अन्य-प्रयोजनं वक्ष्यते॥

१७१। हलि सर्वेषाम्॥८।३।२२॥

दी—। भोभगोअघोअपूर्वस्य लघ्वलघूच्चारणस्य यकारस्य लोपः स्याद्धलि सर्वेषां मतेन। भो देवाः। भो लक्ष्मि। भो विद्वद्वृन्द। भगो नमस्ते। अघो याहि। देवा नम्याः। देवा यान्ति। 'हलि' किम्? देवायिह—देवा इह।

All Professors agree that य preceded by भोभगो &c. be it lightly or regularly pronounced elides when a consonant follows. Thus भो देवाः &c

मित—। "भोभगो—" इत्यस्ति। स च अशि परे विधिः। तेन 'हलि' इत्यशि हलि इत्येवं वेदितव्यम्। 'लोपः' इत्यनुवर्त्तते 'व्योः' इति च। तत्र अशि हलि वकारस्य सम्भावना नास्ति इत्याह 'यकारस्य लोपः' इति। 'सर्वेषाम्' आचार्य्याणां 'मतेन'। शाकटायनस्यापि लोपः न तु लघुप्रयत्नतर इत्यर्थः इति वृत्तिः॥

१७२। रोऽसुपि॥८।२।६९॥

दी—। अह्नो रेफादेशः स्यात् न तु सुपि। रोरपवादः। अहरहः। अहर्गणः। 'असुपि' किम्? अहोभ्याम्। अत्र "अहन्" (८।२।६८) इति रुत्वम्।

रेफ is substituted for the final of अहन् but not when सुप् follows. This over-rules the रु directed by the previous rule "अहन्" (8. 2. 68.) Thus अहन् अहन् gives अहर् अहर् and the second र् becomes विसर्ग by "खरव—"। Compounding अह्नां गणः we get अहन् गण=अहर्गण=अहर्गणः। Why say असुपि? Witness अहोभ्याम्; अहन् भ्याम् gives अहरु भ्याम् by "अहन्"; next अह उ भ्याम् by "हशि च"=अहोभ्याम्।

मित—। पूर्वसूत्रात् अहन् इत्यनुवर्त्तते। तत्र च षष्ठ्यर्थे प्रथमा। पदस्य इत्यधिकृतम्। तेन पदान्तस्य अहन्शब्दस्य रः इत्यर्थः। 'असुपि' इति प्रसज्यप्रतिषेधः न पर्य्युदासः, तदाह 'न तु सुपि' इति। 'रोः' पूर्वसूत्रेण विहितस्य उकारानुबन्धकस्य 'रेफस्य 'अपवादः'। शुद्धो हि रेफः अनेन विहितः। तेन सुपि रुः, अन्यत्र रेफ इति व्यवस्था॥ अहोभ्याम् इत्यत्र सुपि पूर्वस्य पदत्वम्। तेन रुः, उत्वञ्च॥

दी—। "रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्" (वार्त्तिक)। अहोरूपम्। गतमहो रात्रिरेषा। एकदेशविकृतस्य अनन्यत्वात्—अहो रात्रः। अहोरथन्तरम्।

It should be stated that अहन् takes रु when रूप, रात्रि or रथन्तर follows. Thus compounding अह्नः रूपम् we have अहन् रूप। Changing न् into रु and then subitituting उ for रु by "हशि च" &c. we get अहो रूपम्। In the next example there are two sentences गतम् अहः and रात्रिरेषा। Here the विसर्ग in अहः is by "खरव—"। This is असिद्ध with respect to our Varttika here. Hence changing अहर् into अह उ &c. compounding अहश्च रात्रिश्च we have अच् समासान्त by "अहःसर्वैकदेश—" which changes रात्रि into रात्र। By the maxim "एकदेशविकृतमनन्यवत्"—This रात्र is the same as the रात्रि from which it is derieved; hence we have रुत्व &c. Similarly अहन् रथन्तर gives अहोरथन्तरम्।

मित—। रूप, रात्रि, रथन्तर इत्येतेषु परतः अहन् शब्दस्य रुत्व स्यादित्यर्थः। "रोऽसुपि इति "रत्वे प्राप्ते रुत्ववचनम्॥ अह्नः रूपम् इति स्थिते

समासे अहन् रूप। रुत्वे उत्वे च अहोरूपम्। गतम् अहः इत्यत्र प्रथमम् अहन् सु इत्यासीत्। ततो "हल्ङ्याब्भ्यो—" इति सुलोपे अहन्। इह लोप-शब्देन लुप्तत्वात् प्रत्ययलक्षणेनायं सुप्परः। तेन रुत्वे अह र् इति। "खरव—" इति विसर्जनीये गतमह इति। अतःपरं रात्रिरेषा इति वाक्यान्तरसन्निधाने "हशि च" इत्युत्वे कर्त्तव्ये असिद्धो विसर्जनीयः इति कृते उत्वे रूपम्। एतेन नायं वार्त्तिकस्यास्य दृष्टान्तः। अहोरात्र इत्यत्र द्वन्द्वे अहन् रात्रि अच् ( समासान्त ) इति स्थिते अहोरात्रि अच्=अहोरात्रः। समासान्ताः किल समासावयवा न हि उत्तर-पदावयवाः तेन इह अहन् शब्दात् परं रात्रिशब्द एव न रात्रशब्द एकादशविकारकथा च नोत्पद्यते। "एकदेशविकृतमनन्यवत्" इत्यस्य तु अयमर्थः—शब्दः कश्चित् एकदेशे विकृतं चेत् भवति तथाप्यन्यो स एव शब्द इति मन्तव्यम्। रात्रिग्रहणे अंशतो विकृतस्य रात्रस्य च ग्रहणमित्यर्थः॥

दी—। "अहरादीनां पत्यादिषु वा रेफः" ( वार्तिक )। विसर्गापवादः। अहर्पतिः। गीर्पतिः। धूर्पतिः। पक्षे विसर्गोपध्मानीयौ।

अहर् &c. optionally retain their र् when पति &c. follow. This optionally over rules विसर्ग। Thus अह्नां पतिः compounded gives अहन् पति=अहर् पति अहर्पतिः। Similarly गिरां पतिः gives गीर् पति गीर्पतिः, धुरां पतिः gives धूर् पति धूर्पतिः। The alternative forms are अहः पति—अह ⏜ पतिः, गीःपतिः—गी ⏜ पतिः, धूःपतिः—धू ⏜ पतिः।

मित—। इह 'अहर्' इति अहन् शब्दस्य रेफे कृते रूपम्। आदिशब्दः प्रकारे। 'अहरादीनाम्' अहःप्रकाराणाम् अहः सदृशानामित्यर्थः। रान्तत्वं सादृश्यम्। रान्तानां पत्यादिषु परतः रेफादेशो वा स्यादिति वार्त्तिकार्थः। ननु यदि रान्ताः, तथा रेफादेशः। मैवम्, यदन्यत् नित्यतया प्राप्तं तेन विकल्पोऽस्तु इत्याशयः। "खरवसानयोः—" इति रेफस्य नित्यं विसर्जनीयः प्राप्तः तस्यायं नित्यत्वापवादः। तेन अह्नां पतिः इत्यादि समासे अहर्पतिः इत्याद्यपि भवति। 'पक्षे' अहः पतिः इति विसर्जनीये तस्य "कुप्वोः—" इति 'विसर्गोपध्मानीयौ'। तेन प्रत्येकं त्रीणि रूपाणि। गीष्पतिरित्यसाधुरेव इति प्रामाणिकाः॥

१७३। रो रि ॥८।३।१४॥

दी—। रेफस्य रेफे परे लोपः स्यात्।

र् elides when another र् follows. Thus in पुनर् रमते the first र् elides leaving पुन रमते, and then—

मित—। 'लोपः' इति पूर्वसूत्रात् अनुवर्त्तते। 'रः रि' इति च्छेदः। रः इति षष्ठी रि इति सप्तमी ॥ पुनः रमते इत्यत्र विसर्जनीयस्य असिद्धत्वात् रेफरूपेण ग्रहणं ततो लोपः। पुन रमते इति जाते—

१७४। ढ्रलोपे पूर्वस्य दीर्घोऽणः ॥६।३।१११॥

दी—। ढरेफौ लोपयतीति तथा। तस्मिन् वर्णे, अर्थात् ढकार-रेफात्मके, परे पूर्वस्य अणो दीर्घः स्यात्। पुना रमते। हरी रम्यः। शम्भू राजते।

A letter that causes ढ or र to elide is ढ्रलोप। Such a letter following i. e. by implication ढ or र following, the अण् that precedes is lengthened. Thus in पुन रमते above the र is रलोप because it has caused the र of पुनर् to disappear. Hence the preceding अ, which is an अण्, is lengthened and we get पुना रमते। Similary हरिः रम्यः gives हरिर् रम्यः the विसर्ग being असिद्ध, i. e., हरि रम्यः and then हरी रम्यः; so also शम्भू राजते।

मित—। 'ढ्र' इत्यत्र रेफे अकार उच्चारणार्थः। ढ् च रश्च ढ्रौ। तौ लोपय-तीति 'ढ्रलोपः' कर्मण्यणि उपपदतत्पुरुषः। 'तथा' इति ढ्रलोपशब्दं लक्षयति। "ढो ढे लोपः" इति सूत्रेण ढकारो ढकारं लोपयति। तत् ढकारो ढलोपः। "रो रि" इति च रेफो रं लोपयति, तेन रेफो रलोपः। एवम् ढश्च रश्च इति वर्णद्वयं ढ्रलोपशब्दवाच्यम्। अत आह 'तस्मिन् वर्णे अर्थात् ढकाररेफात्मके' इत्यादि ॥ उदाहरणे रेफलोपे पुन रमते इति जाते रात् पूर्वस्य अकारस्य दीर्घः। ननु इह "रो रि" इत्यसिद्धो लोपः। तेन 'पुन' इत्यकारस्य 'रमते' इति रेफस्य

च मध्ये रेफेण व्यवधानमस्ति। अणश्च दीर्घत्वं न प्राप्नोति। अत्रोच्यते—'ढ्लोपे' इति लोपशब्दस्य उच्चारणसामर्थ्यात् सिद्धो लोपः, दीर्घश्च भवति॥

दी—। 'अणः' किम्? तृढः। वृढः। तृहू हिंसायाम्। वृहू उद्यमने॥ 'पूर्व'-ग्रहणम् अनुत्तरपदेऽपि पूर्वमात्रस्यैव दीर्घार्थम्। अजर्घाः॥ लीढः।

Why say अणः? This is to exclude the lengthening of ऋ which is not an अण्। Thus from the roots तृह to injure and वृह to up lift तृह क्त=तृढ्त=तृढ् ध=तृढ् ढ=तृढः without lengthening the ऋ। Similarly वृढः। पूर्व is specifically mentioned in the rule to indicate that even when there is no उत्तरपद and therefore no पूर्वपद, as in पुनारमते &c. the lengthening takes place in the अण् that merely precedes without being in a पूर्वपद। This justifies the आ in the well-known example अजर्घाः which is the second person singular of गृध् with यङ्लुक् in लङ्। Thus अट् गृध् यङ्लुक् सिप्=अ गृध् गृध् सि=अ ज गृध् स=अजर् गर्ध् स्=अजर् गर्ध्=अजर् घर्द्=अजर् घर्र्=अजर् घर् by "रो रि"=अजर् घार् by "ढ्रलोपे—" though the अ before the last र् is merely the पूर्व of it there being no उत्तरपद or पूर्वपद here=अजर्घाः the last र् becoming विसर्ग by "खरवसानयोः—"। An example of ढलोप is लीढः। Thus लिह् क्त=लिढ् त=लिढ् ध=लिढ् ढ=लि ढ=लीढः।

मित—। तृढ इति तृहेः क्तप्रत्यये रूपम्। तत्र "हो ढः" (८।२।३१) इति ढत्वे तृढ् त इति स्थिते "झषस्तथोः—" (८।२।४०) इति तकारस्य धकारे तृढ् ध इति। ततः "ष्टुना ष्टुः" (८।४।४१) इति ष्टुत्वे तृढ् ढ। "ढो ढे लोपः" (८।३।१३) इति ढलोपे तृढः। "पूर्वस्यैवाण्ग्रहणः सर्वं" इत्युक्तेः ऋकारस्य अनण्त्वात् न दीर्घः। एवं वृढ इत्यपि। ननु "ढो ढे—" इत्येतत् प्रति "ष्टुना ष्टुः" इति ष्टुत्वमसिद्धम्, तत्कथमिह लोपः? उच्यते—ष्टुत्वमाश्रित्य एव लोपस्य प्रवृत्तिः, अतः सिद्धं ष्टुत्वम्। "सिद्धत्वमाश्रयात्" इति वृत्तिः। तत्र "असिद्धत्वे

निर्विषयमेतत् स्यात्" इति हरदत्तस्य विवरणम् ॥ 'पूर्वस्य' इति किम्, यावता 'ढ्रलोपे' इति सप्तमी निर्देशेनैव पूर्वस्य विधिर्विज्ञायते? उच्यते—न हि एतदर्थं 'पूर्वग्रहणम्'। इह 'उत्तरपदे' इत्यधिकृतम्। त॰ ॰॰॰वर्क समासचरमावयवार्थकम्। तत्सामर्थ्यात् समासप्रथमावयवे रूढस्य 'पूर्वपदस्य' विधिर्विज्ञायते। एवं मा विज्ञायि इत्येतदर्थं विशिष्य पूर्वग्रहणम्। तथा सति यत्र उ॰ ॰दं किमपि नास्ति तदापि पूर्वमात्रस्य अणः अनेन दीर्घो भवति। तेन सिध्यति भाष्यवृत्त्याद्युक्तम् 'अजर्घाः' इति रूपम्। अत्र गृधु अभिकाङ्क्षायामिति धातोर्यङ्, तस्य च लुक्। प्रत्ययलक्षणेन द्वित्व ग्रध् ग्रध् इति स्थिते "हलादिः शेषः"—ग ग्रध्। चुत्वे "उरत्" इत्यत्वे रपरः पुनर्हलादिशेषे च जग्रध्। "रुग्रिकौ—" इति रुकि जर्ग्रध्। अस्य धातुत्वे लङि सिपि अट्, जर्ग्रध् शप् सिप्। "अदादिभ्यः शपः" इति शपलुकि अ जर्ग्रध् स्। "एकाचोबशो भष्—" इति भष् भावे अजर्घ्रध् स। "हल्ङ्याब्भ्यो—" इति सिप्लोपे अजर्घ्रध्। लघूपधगुणे अजर्घर्ध्। "झलां जशोऽन्ते" इति जश्त्वे अजर्घर्द्। "दश्च" इति रुत्वे अजर्घर्र्। "रो रि" इति प्रथमरलोपे अजर्घर्। इह र् इति न उत्तरपदम् नापि अजर्घ इति पूर्वपदम्। तथापि 'पूर्व—ग्रहणसामर्थ्यात् "ढ्रलोपे—" इति दीर्घः प्रवर्त्तते। तेन अजर्घार्। "खरव—" इति विसर्गे अजर्घाः॥

**दी—। 'मनस् रथः' इत्यत्र रुत्वे कृते, "हशि च" इत्युत्वे 'रो रि" इति लोपे च प्राप्ते—**

Compounding मनसो रथः we get मनस् रथ। Substituting रु for स् we have मनर् रथ। Now arises a difficulty. "हशि च" requires the र् to become उ while "रो रि" wants to drop the र् altogether. What is to be done? The answer follows—

मित—। इह मनस् रथः इति विसर्गो लिपिक॰ प्रमादज इव प्रतिभाति। समासे सुब्लुकि 'मनोरथ' इति प्रातिपदिके जाते पश्चात् विसर्गोत्पत्तिः। अथवा सिद्धस्य मनोरथः इति रूपस्य अङ्गविश्लेषण मात्रमेतत्॥ सूत्रयो र्विरोधं प्रदर्श्य समाधिमाह—

१७५। विप्रतिषेधे परं कार्य्यम् ॥१।४।२॥

दी—। तुल्यबलविरोधे सति परं कार्य्यं स्यात्। इति लोपे प्राप्ते "पूर्व्वत्रासिद्धम्" इति "रो रि" इत्यस्यासिद्धत्वात् उत्वमेव। मनोरथः।

In cases of conflict of two rules of equal force the later in Panini's order should have the preference. Thus लोप as directed by the later rule "रो रि" comes in. But by the rule 'पूर्व्वत्रासिद्धम्" the लोप is असिद्ध with respect to "हशि च"। Hence we get उ which yields मनोरथः।

मित—। वि इत्यव्ययमिह व्यतिहारे वर्त्तते। प्रतिषेधो निवर्त्तनम्। परस्परनिवर्त्तनं विप्रतिषेधः। तदाह 'तुल्यबलविरोधे सति' इति तुल्यबलयोरेव अन्योऽन्यनिवर्त्तनसम्भवात्। अथ एवंविधे विषये किं 'कार्य्यं' करणीयम् इत्यत उत्तरमाह 'परम्' इति पाणिनीये विन्यासे यत् 'परं' परवर्त्ति तदेव 'कार्य्यम्'॥ इह "रो रि" इति हि परवर्त्ति, अतस्तदेव कार्य्यम्। पक्षान्तरे क्वाऽप्यस्मिन् लोपे तस्य उत्वं प्रति असिद्धत्वात् अकृतवद्भवति लोपः। तेन उत्वमेव—मनोरथः॥ तुल्यबलविरोधे इत्युक्तम्। उत्सर्गापवादयोः नित्यानित्ययोः अन्तरङ्गबहिरङ्गयोश्च विरोधो न तुल्यबलविरोधः। तेन परमपि उत्सर्गादिकं विहाय पूर्व्वमपि अपवादादिकं कार्य्यम्॥

१७६। एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ॥६।१।१३२॥

दी—। अककारयोरेतत्तदोर्यः सुः तस्य लोपः स्यात् हलि न तु नञ्समासे। एष विष्णुः। स शम्भुः। 'अकोः' किम्? एषको रुद्रः। 'अनञ् समासे' किम्? असः शिवः। 'हलि' किम्? एषोऽत्र।

The affix सु coming immediately after एतद् or तद् is dropped when a हल् follows provided the एतद् or तद् has no क in it and is not in a नञ् तत्पुरुष। Thus एष विष्णुः etc. Why say अकोः? Witness एषको रुद्रः where क prevents the elision. Why

say अनङ् समासे ? Witness असः शिवः where the नञ् particle अ bars the elision. Whysay हलि ? Witness एषोऽत्र where the स is retained and changes into रु, उ etc.

मित—। 'अकोः' इति अक्शब्दस्य षष्ठ्या द्विवचने रूपम्। अविद्यमानः क् ककारः अनयोः इति अकौ। तयोः 'अकोः' अककारयोरित्यर्थः। एतत्तदोः इत्यस्य विशेषणमेतत्। ननु तच्छब्दे एतच्छब्दे च ककारस्य गन्धोऽपि नास्ति तत् व्यर्थम् 'अकोः' इति विशेषणम्। सार्थकं विशेषणम्। अकचि कृते तत् टेः प्राक् पतति इति तच्छब्द मध्ये पतितं तथा एतच्छब्दमध्ये च पतितं भवति। 'तन्मध्ये पतित-स्तद्ग्रहणेन च गृह्यन्ते। इति तच्छब्देन एतच्छब्देन अकच्‌विशिष्टावपि तौ गृह्येते। एव सत्यां ककारसम्भावनायां तद्व्यावृत्त्यर्थम् अकोः इति विशेषणम्। एषको रुद्र इति रुत्वे उत्वे च रूपम्। असः शिवः इत्यत्र पक्षे "वा शरि" इति सकारे असस् शिवः, श्चुत्वे असश्शिवः इति रूपम्। एषोऽत्र इत्यत्र रुत्वे एषर् अत्र। इह "भो भगो—" इति रोः यादेशः प्राप्तः, "अतो रोः—" इत्युत्वञ्च। यादेशापवादः उत्वम् इति उत्वमेव भवति। कृतेऽपि यादेशे तस्य असिद्धत्वात् उत्वमेव स्यात्।

१७७। सोऽचि लोपे चेत् पादपूरणम् ॥ ६।१।१०४॥

दी—। 'सस्' इत्येतस्य सोर्लोपः स्यादचि पादश्चेत् लोपे सत्येव पूर्य्येत। सेमामविड्ढि प्रभृतिम्। इह ऋक्पाद एव गृह्यते इति वामनः, अविशेषात् श्लोकपादोऽपि इत्यपरे। सैष दाशरथी रामः। 'लोपे चेत्' इति किम्? सइत् क्षेति। स एवमुक्त्वा। 'सत्येव' इत्यवधारणास्तु "स्याच्छन्दसि बहुलम्" (३५२६) इति पूर्वसूत्रात् बहुलग्रहणानुवृत्त्या लभ्यते। तेन इह न—'सोऽहमाजन्मशुद्धानाम्'।

When a vowel follows, the सु of सस् is dropped if that alone will complete the line of a stanza. Thus सेमाम् etc. This is a line of a ऋक् where alone this rule applies as remarked by Vamana. Others apply it indiscriminately to ordinary verses also thus सैष etc. Why say लोपे चेत्? Witness स इत् क्षेति in a line of a ऋक where elision spoils the meter (also witness

स एवम् in an ordinary verse); and there is no elision here. We have however said लोपे सत्येव etc. (if elision alone etc.) This emphasis through एव is not justified by the rule itself, but it is inferred from the अनुवृत्ति of बहुल from the preceding rule "स्याच्छ—"। बहुल indicates irraegularity and completely justifies the irregular introduction of एव। The sense now being if लोप (elision) *alone*" etc. We do not get लोप in सोऽहम् etc. (of Kalidasa) because the पाद can be completed even without लोप; hence लोप is not to be had here.

मित—। 'सोऽचि' इत्यत्र 'सस्' इति तच्छब्दस्य प्रथमैकवचनस्य अनुकरणम्। ततः षष्ठ्यर्थे प्रथमा। तदाह 'सस्' इत्येतस्य' इत्यादि। 'सुलं पः' इत्यनुवर्त्तते। 'पाद' शब्देन वामनः ऋक्पादमेव गृह्णाति, विशेषाभावात् यस्य कस्यचित् श्लोकस्य पादं गृह्णन्ति अपरे। 'लोपेचेत्' इत्यतो ज्ञायते लोपेसति पादश्चेत् न पूर्य्यते नैव लोपो भवति। तथा च 'स इत् चेति' इत्यत्र लोपे कृते 'सेत् चेति' इति भवति पादस्य न पूर्य्यते ततो न लोपः। सस् इति स्थिते रुत्वे सर् इत्। "भो भगो" इति यत्वे सति—सय् इत्। यलोपे शाकल्यस्य स इत्। एवम् 'स एवमुक्ता' इत्यत्रापि बोध्यम्। 'लोपे सत्येव' इत्युक्ते लोपं विना पादश्चेत् न पूर्य्यते लोप एव भवति, अथ पूर्य्यते नैव लोपः भवति इत्यर्थो लभ्यते एव। तेन "सोऽहमाजन्मशुद्धानाम्" इत्यत्र लोपो न। इह तु सत्यपि असत्यपि लोपे पादपूरणं सिध्यति। सति लोपे "साहमाजन्म" इति असति लोपे "सोऽहमाजन्म—" इति आयाति। उभयथापि पूर्णः पाद अतो न एव लोपः। एवकारश्चायं पूर्वसूत्रात् बहुलग्रहणानुवृत्त्या लभ्यते॥

इति सारदारञ्जनविद्याविनोदसमारब्धायां श्रीकुमुदरञ्जनेन परिशोधितायां सिद्धान्तकौमुदीव्याख्यायां मितभाषिण्यां सन्धिप्रकरणम्।

समाप्तश्च प्रथमभागस्य प्रथमो खण्डः।

---

यदनुक्तं दुरुक्तं वा मतिमोहसमुद्भवम्।
सन्तः सन्ततकारुण्यास्तत् सर्वं मर्षयन्तु मे॥